PRACYAVANI SANSKRIT TEXTS

Vol. XXXX

# ॥ ओथेलो ॥

# "OTHELLO"

BY

DR. JATINDRA BIMAL CHAUDHURI

CALCUTTA. 1968.

Published By—Dr. Roma Chaudhuri
For
PRACYAVANI
( Institute of Oriental Learning )
3, Federation Street, Calcutta-9.

Available from the
PRACYAVANI
Address as above

SANSKRIT PUSTAK BHANDAR
38, Cornwallis Street, Calcutta-9.

DAS GUPTA & CO.
54/3, College Street, Calcutta-12.

CHOWKHAMBA SANSKRIT SERIES OFFICE
Banaras City.

MOTILAL BANARASI DAS
P. B. 75, Chowk, Banaras City
Or,
Jawaharnagar, New Dehli.

MUNSHIRAM MANOHARLAL
P B, 1165, Nai Sarak, Dehli-6.

Printed by—Dr. Roma Chaudhuri
3, Federation Street, Calcutta—9

Rexin : Rs. 10. only.

Price Rs. 8 only.

PRACYAVANI SANSKRIT TEXTS

Vol. XXXX

# ॥ ओथेलो ॥

# "OTHELLO"

BY


DR. JATINDRA BIMAL CHAUDHURI



CALCUTTA. 1968.

## "The Last Gift"

Since I met him, I found him always thinking and reading and delivering speeches and writing, and helping others in doing the same. Nothing else did he do—never read a novel, never went to a Cinema, never set out for merry-making.

Such was Dr. Jatindra Bimal—a thinker, a scholar, a poet to the core—Study was his only passion ; Composition, the only function. Because of this one-pointed attention, he could easily produce so many invaluable works within such a short time.

But how strange ! The last of his numerous works was the present one, this beautiful Sanskrit version of Shakespeare's **"Othello"**. He finished it in June, 1964, and his Call came on the 10th July, 1964. It was scheduled to be staged on the 5th August, 1964, under the auspices of Citizen's Committee for Shakespeare's Fourth Birth-Centenary, in Mahajati Sadan, Calcutta. But it was actually staged there on the 13th September, 1964, with great success.

Dr. Jatindra Bimal was a Universal Man, the votary of a Universal Language.

His last gift to us proves this anew !

**"Pracyavani"**
( Institute of Oriental Learning )
3, Federation street
Calcutta-9
Phone : 35—1995
10th March, 1967.

**Roma**

## BLESSINGS

If the Sanskrit Version of Shakespeare's "Merchent of Venice, "Venice-Banijam", is a jewel of a work, "**Othello**", the Sanskrit version of Shekespeare's celebrated "**Othello**" is undonbtedly a jewel of jewels. "**Othello**" is a very difficult piece of work, full of subtle, psychological touches, intricacies, actions and re-actions etc. In that sense, it is far more complex than "Merchant of venice".

Still, with what a great ease, what a charming grace, what an exhilarating naturalness does Dr. Jatindra Bimal execute the task ! The result is a finished product of great value, and a unique contribution to Modern Sanskrit Literature.

I have been informed that this was Dr. Jatindra Bimal's last work. Really, I fail to understand as to why God willed it to be so. For, why should Dr. Jatindra Bimal, who all throughout his life sang the praise of his beloved Mother, leave his mortal coils, by not singing of Her, but of an altogether foreign amorous story of jealousies, intrigues, revenges, and what not ?

But, perhaps, it was because, he also wanted to prove that Sanskrit could easily and fully stand as a world-language, as a universal-language, capable of expressing all kinds of thoughts and feelings and desires of all individuals, all over the world. And,he breathed his last with this firm faith in his mind that the vital language of Sanskrit could be easily adapted, adjusted to modern needs and situations.

Dr. Jatindra Bimal can never be dead ! For, his sublime ideals live ; his glowng personality lives ; his burning example lives ; his immortal works live ; his

image, his life-breath, his fragrance, his nectar, his light live in his beloved wife Dr. Roma Chaudhuri, the beloved Principal of the celebrated Lady Brabourne College, Govt. of West Bengal, Calcutta.

So, let us not be depressed, for, if a mortal is immortalised in so many ways, what more is needed ?

( Dr, ) Satkari Mookerji
Formerly, Head of the Department of Sanskrit, and Asutosh Professor of Sanskrit, Calcutta University ;
and
Director, Nalanda Reseach Institute, Bihar
10th March, 1967·

# ओथेलो

[ डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीणेन विरचितम् ]

( नान्दी )

नमामि सेक्स्पियारं कवि-सार्वभौमं
वाङ्माधुर्य-वैदग्ध्य-विकशित-शोभम् ।
चरित्र-रञ्जण-विभुं भाषा-कुहकिनं
चतुःशततम-जन्म-दिनोत्सव-सेवितम् ॥

---

[ प्रस्तावना ]

( नान्द्यन्ते सूत्रधारः )

सूत्रधारः । शुभे वर्षेऽस्मिन् विश्वविश्रुत-महाकवि-सेक्स्पियार-महोदयस्य चतुःशततम-जन्मोत्सवोऽष्ठीयते विश्ववासिभिस्तथा चास्माभिर्भारतवासिभिरित्यहो परम-मोदकारणम् अस्माकं सर्वेषाम् ।

तमिमम् उत्सवमुपलभ्य "महाजातिसदन" कर्तृपक्षैरादिष्टोऽस्मि—संस्कृतभाषया रूपान्तरितं महाकवि-सेक्स्पियार-विरचितं किञ्चन नाटकं नाट्ये प्रयोक्तव्यम् इति ।

तद् वयं "प्राच्यवाणी"-सदस्याः आधुनिक-कविश्रेष्ठ-पण्डितप्रवर-डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-महोदयेन संस्कृत-भाषया रूपान्तरितम् "ओथेलो" नामधेयं नाटकं नाट्ये प्रयोद्यामहे ।

किन्तु कथं चिरायते मम सर्वकर्मनिपुणा नटी ? ( नेपथ्याभिमुखः ) देवि ! देवि !

**नटी।** (प्रविश्य) देव ! इयमहमागतास्मि। किन्तु आंग्ल-भाषातः संस्कृत-भाषया रूपान्तरितं नाटकं निखिले विश्वे वयमेव सर्वप्रथमम् अभिनेष्यामः इति हेतोर्भीतास्मि।

**सूत्रधारः।** देवि ! किं तव भीतेः कारणम् ? संस्कृतं नाम शाश्वतिकी सार्वजनीन-भाषा, महाकवि-सेक्स्पियार् अपि विश्ववन्द्यः शाश्वत-कविः। ततस्तस्य भावस्फूर्ति-विषये विश्वभाषा-संस्कृत-माध्यमेन प्रयत्नोऽवश्यमेव करणीयः, स कथं भयावहो भवितुमर्हति ?

**नटी।** सत्यं सत्यं देव ! भवता प्रवोधिताहं साम्प्रतं निश्चिन्तास्मि। ततो देव वहुजन-सुखाय वहुजन-हिताय च नाटकमिदमभिनेतुं प्रवर्तामहे।

**सूत्रधारः।** (सहर्षम्) देवि ! पश्य पश्य ! चतुर-चतुरेण अस्मत्-सहकारिणा गृहीत-डिण्डिमवादक-नेपथ्येन प्रारब्ध एवाभिनयः।

स भूमिकां डिण्डिम-वादकस्य
गृह्णन् गलालम्बित-वाद्य-भाण्डः।
कवेर्यशोघोषण-कैतवेन
तनोति सेनापति-मर्मवाणीम्॥

(उभौ निष्क्रान्तौ)

इति प्रस्तावना।

—❀—

## प्रथम-दृश्यम्

(प्रविशति कश्चन डिण्डिमवादकः काचन जनता च)

**डिण्डिमवादकः।** अस्माकं सुमहतो वीरस्य सेनानायक-ओथेलो-महोदयस्यायमेवाशयः—समुद्रे तुर्कीरणतरी-विनाश-संवादलाभानन्दहेतोः सर्वे विजयोत्सवं प्रतिपालयेयुः। नृत्यैर्वह्न्युत्सवैः क्रीडादिभिः येन केनोपायेन वा उत्सवो भवतु प्राणामोदी।

नायं केवलो विजयोत्सवदिवसः, सेनाध्यक्ष-विवाहोत्सव-दिवसोऽपि, तत इयं हार्दिकी आनन्दानुष्ठानघोषणा। अद्य अपराह्न-पञ्चमघटिकातः रात्रेरेकादश-घटिकापर्यन्तं भोजनागारद्वारं सर्वेभ्यः प्रोन्मुक्तं भविष्यति। भगवान् साइप्रास्जनसाधारणस्य वीर-सेनाध्यक्षस्य ओथेलो-महोदयस्य च कल्याणं करोतु। (प्रस्थानम्)

इति प्रथम-दृश्यम्

---

## द्वितीय-दृश्यम्

दुर्गमध्यस्थः कश्चन प्रकोष्ठः।

(प्रविशन्ति ओथेलो, डेस्डिमोना, क्यासिओ अनुचराश्च)

**ओथेलो।** प्रिय माइकेल! अद्य रात्रिसमये दुर्गसंरक्षणभारस्त्वयि एव न्यस्तः। आनन्दोल्लासो भवतु संयतः, विवेचना-सीमितः।

**क्यासिओ।** सेनाध्यक्ष-महोदय! करणीयविषये इयागो मया सर्वथोपदिष्ट एव। तथापि अहं स्वयमेव सर्वदा तद्विषये समुद्युक्तो भविष्यामि।

**ओथेलो।** इयागो नितरां विश्वासभाजनम्। माइकेल! साम्प्रतं विदायः। श्वोऽतिप्रत्यूषे दर्शनं मया सह अवश्यमेव त्वया कार्यम्।

(डेस्डिमोनां प्रति)

प्रिये! पण्यं केवलं क्रीतम् इदानीं तदास्वादनीयम्। क्रयेण वयं कीदृश-लाभवन्तो जाताः तदिदानीमपि अज्ञातम्। सर्वेषां शुभरात्रिरास्ताम्।

(ओथेलो डेस्डिमोना अनुचराश्च प्रस्थिताः)

(प्रविशति इयागो)

**क्यासिओ।** आयातु इयागो-महोदयः। प्रहरिकार्ये नियुक्तौ भवावः।

**इयागो।** उपसेनाध्यक्ष-महोदय! न साम्प्रतम्। दशघटिका न गता। डेस्डिमोनां प्रति प्रेमाधिक्यहेतोः सेनाध्यक्ष-महोदयोऽन्तर्गतः। तस्य वा को दोषः?

इयं रजनिरुज्ज्वला विशद-कौमुदी-कोमला
जयोत्सव-समुल्लसन्नगरमेतदानन्दितम्।
प्रफुल्ल-तनुवल्लरी पुनरियञ्च रम्या वधूः
कथं न विदधातु तं वत गृहार्थमुत्कण्ठितम्॥१॥

**क्यासिओ।** डेस्डिमोना सत्यमेवानिन्द्य-सुन्दरी।

**इयागो।** निश्चितमहं वदामि, सा स्फुरन्ती विलसति।

**क्यासिओ।** वस्तुतः सा चिरनवीना कोमला च !

**इयागो।** अहो मधुरिममयी तस्या दृष्टिः ! या प्रेम स्वत एव जनयति।

**क्यासिओ।** प्रेमोद्बोधं करोतु नाम, सलज्जा सा दृष्टिः खलु।

**इयागो।** किन्तु तस्या वदन-निःसृता-वाणी—प्रेमोद्बोध-विषयेऽपि साऽन्यूना ?

**क्यासिओ।** वस्तुगत्या अपूर्वा खलु सा नारीप्रतिमा।

**इयागो।** कायेन मनसा वाचा च तयोर्यामिनीसुखं कामये। एहि उपाध्यक्ष-महोदय ! ममास्ते मद्यपूर्णं पात्रं वहिश्च दण्डायमानमास्ते साइप्रासद्वीप-तरुण-दलम्। पानसुखेन परितृप्तं कृष्णाङ्गस्य ओथेलो-महोदयस्य मङ्गलकामि तद् दलम् आनन्दमवाप्स्यति।

**क्यासिओ।** नाद्य, इयागो ! मम मस्तिष्कं दुर्वलम्; नैतन्मद्यं ममानुकूलम्। आमोदाय काचन भिन्ना रीतिः सत्यं वरणीयतरा।

**इयागो।** तेऽस्माकं वन्धवः। स्वल्पं भवताऽऽस्वादनीयम्। अथवा भवतः प्रतिनिधिरूपेण अहमेव पानं करिष्ये।

**क्यासिओ।** अद्य यामिन्यामितः पूर्वमेव पीतवान् अहं, सौभाग्यात् तन्मद्यमासीज्जलवहुलम्। तथापि वदनं मम भिन्नरूपं प्रकटयति। नैषा दुर्वलता उपेक्षणीया।

**इयागो।** अहो महोदय ! उत्सव-रात्रिरियं, तरुण-नागरिकाः सर्वे अपेक्षन्ते।

**क्यासिओ।** कुत्र ते ?

**इयागो।** द्वारसन्निकट एव तेऽपेक्षन्ते। ते अन्तरायन्त्विति भवत्-सकाशे ममायमनुरोधः।

**क्यासिओ।** तत् करोमि। किन्तु नैतन्मह्यं रोचते (प्रस्थितः)।

**इयागो।** (स्वगतम्) क्यासिओ यत् परिमाणं मद्यं पीतवान् तदभ्यधिकं किञ्चिदपि पिबति चेदसौ नारीणां पालित-कुक्कुरवत् क्रोधापन्नः सन् सर्वैः सह विवादप्रवृत्तो भविष्यति।

मद्यप्रमत्त-साइप्रास्-द्वीपवासिभिः सह मद्यपानरतमेतं तथा कस्मिंश्चित् कर्मणि संप्रवर्तयिष्यामि यत्फलेन तैः सह एतस्य विवादः अनिवार्यो भविष्यति।

अये! ते सर्वे इत एवायान्ति। यदि फलं भवत्याशानुरूपं तदा मम तरणी अनुकूल-रौद्र-पवनाभ्यां लक्ष्यं प्रति द्रुतं प्रागेसरीभविष्यति।

(पुनः प्रविशति क्यासिओ। तेन सह मन्टग्रानो साइप्रास-वासिनश्च, पश्चात् मद्यपात्रहस्ता भृत्याः)

**क्यासिओ।** भो भगवन्! एते मां खलु इतो मध्ये उन्मत्तं कृतवन्तः।

**मन्टग्रानो।** भवान् विश्वसितु, एते भवन्तं स्वल्पं मद्यं पानाय दत्तवन्तः।

**इयागो।** अये तरुणाः! मद्यं मद्यम्। कुत्र यूयम्? (उन्मत्तानां सङ्गीतम्)।

**क्यासिओ।** अये! ईश्वरनाम्ना शपथः। भवतः सङ्गीतमिदं चमत्कृतिं जनयति।

तत् सेनापतिमहोदयस्य स्वास्थ्य-कामनया वयमभ्यधिकं मद्यं पिबामः।

**मन्टग्रानो।** उपाध्यक्ष-महोदय! भवतः प्रस्तावः समीचीनः। अस्मिन् यत्नपरवशो भविष्यामि।

**इयागो।** कोऽत्र भोः! अभ्यधिकं मद्यमानयतु।

**क्यासिओ।** (पायंपायं) भद्रमहोदयाः! न मां भवन्त उन्मत्तं मन्यन्ताम्। साम्प्रतमपि बुध्ये किल यदयं मम दक्षिणो हस्तो वामश्चायमिति। नाहमुन्मत्तोऽस्मि। सत्यं नु दण्डायमानोऽस्मि, भाषणसमर्थोऽपि।

**इयागो।** निश्चितं न भवान् एषु व्यापारेष्वपटुः।

**क्यासिओ।** तद् यूयं न माम् उन्मत्तं परिगणयत।

(स्खलन् परिक्रामति)

(नेपथ्ये कस्यचन "त्रायस्व" त्रायस्व" इति चीत्कारध्वनिः।)

**इयागो।** शृण्वन्तु भवन्तश्चीत्कारध्वनिम्।

(रडारिगो-पश्चाद्धावन-प्रवृत्तस्य क्यासिओ-महोदयस्य प्रवेशः)

**क्यासिओ।** रे कुचक्रिन्! रे जाल्म!

**मन्टग्रानो।** उपसेनाध्यक्ष! किं घटितम्?

**क्यासिओ।** अपि कश्चन धूर्तो मम शिक्षादाता भवेत्? (रडारिगो-मुद्दिश्य) त्वां प्रहारबलेनाहं वेतसीपात्ररूपेण परिणमयिष्यामि।

**रडारिगो।** हंहो मामयं प्रहरिष्यति किल!

**क्यासिओ।** रे जाल्म! क्षुद्रस्य ते एतावती उक्तिः! (पुनः प्रहरति)

**मन्टग्रानो।** सहृदय उपाध्यक्ष-महोदय! कृपया विरमतु भवान् प्रहारात्।

**क्यासिओ।** बाधाप्रदानात् निवृत्तो भव, अन्यथा तवापि मस्तकमहं चूर्णितं करिष्ये।

**मन्टग्रानो।** एहि एहि, भवान् उन्मत्तो जातः।

**क्यासिओ।** उन्मत्तः? (उभौ युद्धरतौ)

**इयागो।** (जनान्तिकं रडारिगोमुद्दिश्य) शीघ्रं प्रचारं कुरु यद् विद्रोहः संघटितः। [रडारिगो द्रुतं वहिर्गतः]

उपाध्यक्ष-महोदय! मैवम्! अहो अत्याहितम्! त्रायस्व त्रायस्व। सर्वे आयान्तु साहाय्यार्थम्। उपाध्यक्ष-मन्टग्रानो-महाशयाः! अये रक्षणकर्त्तारः! साहायकं कुरुत। भवतां प्रहरिकार्यं कीदृशं वा चलति? (नेपथ्ये घण्टा-ध्वनिः) अये! घण्टां वादयति? अये दुष्कार्यप्रतिमूर्त्ते! सर्वमेव नगरं साम्प्रतं निद्रोत्थितं भवेत्! सर्वं नु भगवद्विधानम्।

**क्यासिओ।** विरमतु भवान्। भवताम् अवमाननं गुरुतरं भविष्यति।

( अनुचरवृन्देन सह ओथेलो प्रविशति )

**ओथेलो।** किं न्वत्र संघटितम्?

**रडारिगो।** भगवन्नाम्ना शपथः रक्तं मम क्षरत्येव। मम मृत्युरनिवार्यं एव। ( मूर्छति )

**ओथेलो।** यदि जीवनरक्षणममीप्सितं, सर्वैर्विरम्यताम्।

**इयागो।** सर्वे विरमन्तु, विरमन्तु। उपाध्यक्ष-मन्टग्रानो-भद्रमहोदयाः! अपि भवन्तः स्थान-काल-पात्र-भेदाभेदज्ञानं विस्मृतवन्तः? सेनापतिमहोदयो वाञ्छति सर्वाकार्यविरामम्। अहो लज्जा, सर्वे विरमन्तु।

**ओथेलो।** भगवदिच्छया तुर्कस्थान-निवासिभिरस्माकं युद्धविरतिः संघटिता इति हेतोरेव किं वयं स्वयं तुर्कनिवासिनो भूत्वा परस्परं युद्धमत्ताः सञ्जाताः? यदि भवन्तः खृष्टधर्मावलम्बिनः, तर्हि निश्चितं वर्वरकार्यादस्माद् विरमन्तु।

भद्रसन्ताना भवन्तः सर्वे, तद् वदन्तु किं संघटितम्? सत्यवादिन् इयागो! दुःखात् त्वमर्धमृत इव लक्ष्यसे। तत् कथय—कोऽस्यानिष्टस्य आरम्भकारी? यदि सत्यं मामाद्रियसे, मत्प्रश्नस्य उत्तरं देहि।

**इयागो।** नाहं किमपि जाने। मुहूर्तात् पूर्वमपि मया एतयोर्वधूवरयोरिव गभीरं-प्रेम संलक्षितम्। निमेषात्ततः किं नु जातं कस्य नु ग्रहस्य शापात्—असिधूर्णन-झन्झननपूर्वकम् एतौ रक्तारक्तियुद्धे प्रवृत्तौ। अस्य प्रकृतारम्भवृत्तान्तं नाहं सत्यं जाने। अहो यदि कस्मिश्चिद् युद्धे मम पादयुगलं कृत्तमभविष्यत् तन्निश्चितमितो वरमभविष्यत्। यतस्तदाऽहं नात्र आगमिष्यम्।

**ओथेलो।** माइकेल! कथं त्वमित्थमात्मविस्मृत आसीः?

**क्यासिओ।** सत्यमहं क्षमाप्रार्थी। नाहं तद् वक्तुं पारयामि।

**ओथेलो।** सहृदय मन्टग्रानो महोदय! भद्राचरणाय भवतो नाम सुप्रसिद्धम्। युवकस्यापि भवतो गाम्भीर्यं शान्तत्वमपि विश्वस्य परिज्ञातमास्ते। विज्ञाः सर्वे सर्वोच्च-प्रशंसया भवतो नाम समुच्चारयन्ति।

तत् किं नु संघटितं यस्माद् हेतोर्भवान् सुख्यातिं सर्वां परित्यज्यात्मानं विवादकारिरूपेण सम्भावितवान् ? प्रश्नस्यास्योत्तरं कामये ।

**मन्टग्रानो ।** श्रद्धेय ओथेलो-महोदय ! ममाघातं गुरुतरं विजानातु भवान्। इयागो भवतां कर्मचारी, मत्परिज्ञातं सर्वमसावेव भवन्तं विज्ञापयतु ।

**ओथेलो ।** अहो ! क्रोधो मां करोत्यभिभूतम् । मयाऽवश्यमेव ज्ञातव्यं कस्य दोषादीदृशी विशृङ्खलता आत्मप्रकाशं कृतवती । यमजभ्राताऽपि यदि भवेदसौ, निश्चितं स मया दूरे करणीयः । सर्वे यदा सन्त्रस्ता विषण्णास्तदा रक्षाकारिणः सर्वे संरक्षणस्थाने एव परस्पर-कलहरताः ? अहो वीभत्सताऽपकर्मणः ! इयागो ! अस्य विवादस्य प्रारम्भकः कः ?

**मन्टग्रानो ।** पश्यतु इयागो-महोद्य ! यदि बन्धुत्वहेतोः सहकर्मिणं प्रति आनुगत्य-हेतोर्वा सत्यं विन्दुमात्रमपि अपलपति, तदा भवान् सैनिकनामायोग्य एव मया मन्तव्यः ।

**इयागो ।** अहो नाहमेवं मर्मान्तिकं स्पर्शनीयः । मम बन्धोः माइकेलस्य किमपि अनिष्टं करोमि चेन्निश्चितं मम जिह्वा स्वस्थानात् परिभ्रष्टा भविष्यति । सत्यं विश्वसिमि किल सत्यप्रकाशफलान्न क्यासिओ-महोदयस्य कापि हानिर्भविष्यति ।

सेनाध्यक्ष महोदय ! एवं प्रकारेण घटनेयं संवृत्ता—मन्टग्रानोमहोदयः अहञ्च अत्र आलपनरतौ आस्व, तदा कश्चन "साहाय्यं याचे" "साहाय्यं याचे" इति—कातरध्वनिं कुर्वाणः अत्र समायातः । तस्य पश्चात् क्यासिओ-महोदयः स्वकरेऽसिं विघूर्णयन् समायात् । तदा एष मन्टग्रानो-महोदयः क्यासिओ-महोदयं वारयितुं यतते स्म, अहञ्च तं धावन्तं चीत्कारकारिणं साहाय्यप्रार्थिनमन्वगमम् । यतो मम भीतिरासीत् तस्य चीत्कारहेतोः नगरवासिनः सर्वे वीतनिद्रा भवेयुरिति । अहो दुःखं ! तदेव पश्चात् संघटितम् । किन्तु असौ क्षिप्रगतिर्द्रुतं वहिर्गतः ; तं रोद्धुं नाहं समर्थोऽभवम् ।

विशेषेणास्त्रशब्द-श्रवणात् प्रत्यागतोऽहं क्यासिओ-महोदयस्य कुत्सा-वाक्योच्चारणं तथाविधं श्रुतवान् यदितः पूर्वं मम अपरिज्ञातमेवासीत्।

अहो तौ तदा परस्पर-हननाय समुद्यतौ—यथा भवता सेनाध्यक्ष-महोदयेन स्वयमेव दृष्टम्। इतोऽभ्यधिकां विवृतिं दातुं नाहं समर्थः।

मनुष्या मनुष्या एव, न देवताः। मनुष्याः शार्दूला अपि सम्पद्यन्ते आत्म-विस्मरणपराः। सत्यमेतत्—क्यासिओ मन्टानो-विषयेऽपि अन्याय्यमाचरित-वान्, किन्तु क्रोधवशं गता मनुष्याः कदाचन प्रियतमबन्धूनपि घातयन्ति। पुनस्तदपि निश्चितं यत् पलायनतत्परो जनः क्यासिओ-महोदयं सहनायोग्यं किमपि उक्तवान् इति।

**ओथेलो।** इयागो! जाने सज्जनस्त्वं क्यासिओ-समादर-प्रचोदितो लघु भाषसे। (क्यासिओमुद्दिश्य) क्यासिओ! सत्यमहं त्वामाद्रिये, तथापि इतः प्रभृति न त्वं मम कर्मणि नियुक्तः स्थास्यसि।

[प्रविशति परिचारिकया सह डेस्डिमोना]

अहो त्वत्कृते मम प्रियाऽपि वीतनिद्रा संवृत्ता। शास्ति-भोगविषये त्वं दृष्टान्तो भविष्यसि।

**डेस्डिमोना।** किं नु संघटितम्?

**ओथेलो।** सर्वं साम्प्रतम् अवसानं यातम्, तद्व्रज शय्याशायिनी। (मन्टानोमुद्दिश्य) महोदय! भवत्क्षतारोग्यविषयेऽहमेव भविष्यामि शुश्रूषणतत्परः। इयागो! नगर-शान्तिरक्षणाय त्वं भृशं यतस्व। एतत्-कलहफलेन येषां शान्तिर्विघ्निता, तेषां समाश्वासनं विधेयम्। एहि डेस्डिमोने! एतदेव सैनिकजीवनं—कलहादिहेतोः शान्तिपूर्ण-निद्राऽपि याति लोपम्।

[इयागो-क्यासिओवर्जं सर्वे प्रस्थिताः]

**इयागो।** उपाध्यक्ष! अपि भवान् आहतः?

**क्यासिओ।** ममाघातस्तु अस्त्रचिकित्सावहिर्भूतः।

**इयागो।** हे भगवन्! न तत् कदाचन सत्यं भवतु।

**क्यासिओ।** यशः ! यशः ! यशः ! अहो ! मम सर्वं यशो विनष्टम्। यन्ममाद्य हृतं तदविनश्वरात्मसत्तांशः ; यदवशिष्टमास्ते, तत् पाशव-प्रकृति-मात्रम्।

अहो इयागो ! कुत्र मम यशः, मम ख्यातिः ?

**स्मरामि कार्यस्य जघन्य-रूपं**
**स्मरामि बुद्धेरपि निष्क्रियत्वम्।**
**फलं ततः स्यादधुना कियद्वा**
**गतं यशो यद् गतमेव तन्मे ॥**

**इयागो।** भवान् विश्वसितु, भवत्कातरतां वीक्षमाणस्य मम विश्वासोऽजायत यद् भवत आघातो न शारीरिक इति। तथा सति, चिन्ताकारणमभविष्यत्। ख्यातिर्नाम मिथ्याविडम्बना ; प्रायशः इयं हेतुं विना लभ्यते, कारणं विना नश्यति च। स्वकीयानुभूतिं विना इयं न कदापि नश्यति। सेनाध्यक्षमहोदयस्य पुनः सानुग्रह-दृष्टिलाभाय उपायो विद्यते नाम। केवलं भवता गम्यते चेत् सर्वं सुष्ठु सम्पत्स्यते।

**क्यासिओ।** नहि, अहं जघन्यः पानोन्मत्तो ज्ञानलेशहीनः कर्मचारी। तादृशं महामान्यं सेनाध्यक्षं प्रवञ्चयितुं नाहं यतिष्ये। ततस्तस्य तिरस्कार एव वरम्।

अहो लज्जा ! प्रमत्तो भूत्वाऽहं किं किं नाकरवम्—प्रलापं कलहम् अहंकार-प्रकटनं, शपथं स्वीयच्छायया विवादञ्च ? यदि पानासक्तेरन्तर्निहितां शक्तिं कोऽपि न पश्येत्, पुनस्तस्य नामापि न साधारण्ये परिज्ञातं स्यात्—तदा मया तस्या नामकरणं क्रियेत—दानवी, आसुरिकी इति।

**इयागो।** किन्तु भवान् स्वस्थ इव परिलक्ष्यते। कथं द्रुतं चैतन्यं पुनरवाप्तं भवता ?

**क्यासिओ।** यतोऽहमुन्मत्ततातः क्रोधवश्यतां यातः। यथा उन्मत्तता तथा क्रोधवश्यता, द्वे सममेव जघन्ये। एकाऽन्यामाकर्षति। ततोऽहमात्मानं केवलं कृपापात्रं मन्ये।

**इयागो।** अहो! भवान् अभ्यधिकात्मनिन्दकोऽस्ति। देशकाल-पात्रादि-विवेचनया घटनेयं दुःखकरी सत्यं, तथापि संघटिते व्यापारे आत्मानुकूला व्यवस्था निश्चितं करणीया।

**क्यासिओ।** इयागो! अपि मया मत्पदे पुनः स्थापनाय तत्रभवान् अनुरोद्धव्यः? अथ यद्यसौ मां पानोन्मत्त इति तिरस्करोति? तथा सति "हायड्रा"वत् शतमुखस्यापि मम वाङ्निरोधो निश्चितं भविता। प्राथम्येन संज्ञावान्; पुनः शनैः शनैर्मूर्खः, ततः परं पशुः! अहो अद्भुतं नु संवृतम्! प्रत्येकं मद्यपूर्ण-पात्रमभिशस्तं तदन्तर्गतं वस्तु आसुरभावापन्नम्।

**इयागो।** एहि एहि! उत्तमं मद्यं चिरायादरणीयं वस्तु, यदि तद्-भवेत् सुव्यवहृतम्। ततस्तद्विरुद्धभाषणं न करणीयम्। अहो सहृदय उपाध्यक्षमहोदय! अहं जाने यद्भवान् मन्यते--अहं भवन्तमाद्रिये इति।

**क्यासिओ।** तदेव निश्चितं ममाभिमतम्, किन्तु मत्तोऽहम्।

**इयागो।** सर्व एव जीवः कदाचन पानोन्मत्तो भवितुमर्हति। साम्प्रतं भवता किं करणीयं तद्विषये किमप्यहं वच्मि।

अस्माकम् अध्यक्षपत्नी एव साम्प्रतं अध्यक्षपदमलंकरोति। इत्थं मयोच्यते—यतोऽध्यक्षमहोदयस्तस्याः सौन्दर्यस्य गुणानाञ्च सप्रशंस-पर्यवेक्षण एवात्मानमुत्सृष्टवान्, ततः सुप्रकटं स्वीय-दोषं श्रीडेस्डिमोनासकाशे भवान् स्वीकरोतु। स्वस्थान-सन्निवेशाय तस्याः सकाशे आवेदनं भवान् करोतु नाम। सा ईदृशी उदार-चरिता दयाप्रवणा कर्मतत्परा सुधन्या यद् याच्ञाभ्यधिक-प्रदानेन विना न सा कदापि सन्तोषं लभते, प्रार्थनाभ्यधिक-दानासामर्थ्यं सा स्वगुणापलापं मन्यते।

**क्यासिओ।** कल्याणमयोऽयं परामर्शः।

**इयागो।** भवन्तं प्रति ममाकृत्रिमाकपट-श्रद्धा मां तस्मिन् प्रचोदयति।

**क्यासिओ।** तदहं सर्वथा विश्वसिमि। श्वः प्रातरेवाहं डेस्डिमोनां गुणमयीं मत्कार्यसंसाधनायानुनेष्यामि। यदि मम प्रार्थना न कार्यकरी भवति, तदा मम भविष्यत् अन्धकारपरिवृतं चिराय भविष्यति।

**इयागो।** सत्यमेव भवतोक्तम्। उपाध्यक्ष ! शुभरात्रिं भवतः कामये। प्रहरिकर्मणि आत्मानं नियोक्ष्ये साम्प्रतम्।

**क्यासिओ।** साधो इयागो ! शुभरात्रिः। (क्यासिओ वहिर्गतः)

**इयागो।** अहं दुष्टाधम इति को वदति ? ममोपदेशोऽवश्यमेव सरलः साधुस्तथा च सम्भावनापूर्णः। वस्तुतः ओथेलो-महोदयस्य पुनरनुग्रह-लाभाय एष एव केवलोपायः। विशेषतः डेस्‌डिमोना-महोदयायाः साहाय्यलाभः सुकर एव। प्रकृत्या दाक्षिण्यपूर्णं तस्या मनः सुमोहनम्। ओथेलो-महोदयस्योपरि तस्याः प्रभुता अप्रतिहता। तस्या इच्छाक्रमेण सोऽनन्त-प्रोज्ज्वल-भविष्यन्मण्डितं खीष्टधर्ममपि त्यक्तुं समुद्यतो भविष्यति ध्रुवम्। ओथेलो-महोदयस्य दुर्वलेच्छानिचयं डेस्‌डिमोना-प्रवलेच्छा दैवशक्तिवत् परिचालयति। ततः क्यासिओ-महोदयस्य स्वार्थसिद्धये यं पन्थानमह-मुद्दिष्टवान्, तदर्थं को मां दुष्टाधमं मन्येत ?

किन्तु नारक-देवता एव मया प्रोद्बोधिता। दुष्कार्यं साधयतोऽसुराधमस्य वदने दृश्यते दिव्यशोभा, यथा ममाधुना। यदाऽसौ मूर्खः साधुः डेस्‌डिमोनां स्वकार्यसिद्ध्यर्थं प्रार्थयिष्यते, सा च प्रार्थनानुकूलं व्यवस्यन्ती कृष्णकाय-मनुरोत्स्यति—अहं सकौशलं कृष्णकायस्य कर्णयोस्तथा विषं प्रवेशयिष्यामि यथाऽसौ निश्चितं चिन्तयिष्यति—स्वकाम-वासना-परिपूरणार्थं सेयं कलुष-चित्ता डेस्‌डिमोना क्यासिओ-महोदयस्य साहाय्यं विधातुकामा प्रोन्मत्ता जातेति। केसिओ-मङ्गलसाधन-चेष्टान्विता सा यावत्परिमाणं यत्नं करिष्यति कृष्णकाय-हृदयात् सा तावत्परिमाणमेव दूरभ्रष्टा भविष्यति। एवं तस्या गुणावलीमहं मसीलिप्तां करिष्ये, तया गुणावल्यैव तथा जालम् अहं घट यिष्यामि यथा सर्वे तत्र वद्धा भविष्यन्ति।

(प्रविशति रडारिगो)

रडारिगो ! कीदृशोऽसि साम्प्रतम् ?

**रडारिगो।** अहो वृथाऽहम् अन्वेषणपरोऽस्मि—न खाद्यान्वेषी कुक्कुरवत्, परन्तु केवलं शब्दायमानः श्वेव। मुद्रा मम सर्वा व्ययिताः। तदुपरि विगत-यामिन्यां मर्मान्तिक-प्रहारलाभः! यथा बुध्ये—लाभो मम अयमेव यत्, सर्व-विनिमयेनाहं काञ्चन अभिज्ञतां लप्स्ये सर्वस्वान्तं कृत्वा भेनिस्नगरीं प्रत्यावर्तिष्ये च।

**इयागो।** ये मानवा धर्महीनाः सत्यं ते कृपापात्रम्। कतरत् क्षतं नाम विना कालव्ययं लोपमेति? शनैः पन्थाः। तव विज्ञातं भवतु, यद्वयं युक्तियोगेन कर्म कुर्मः, न मायाबलेन। युक्तिसाध्यं कर्म समय-सापेक्षमवश्यमेव। क्यासिओ त्वां प्रहृतवान्; तद्विनिमयेन त्वं क्यासिओ-महोदयस्य पदच्युतिं लब्धवान्। सौभाग्य-किरणैः प्रवर्धन्ते नाम सर्वं एव, वृक्षगुल्मपादपाः। किन्तु यस्य प्राथम्येन पुष्प-कोरकोद्गमः तस्य फलस्य परिपक्वता प्राथम्येन संभवति ध्रुवम्। अहो प्रभातं समायातम्। आनन्दः कर्म-वाहुल्यञ्च समयं करोति ह्रस्वम्। गच्छ गच्छ, यत्र त्वं नियुक्तोऽसि। त्वरितं तत्र याहि। सर्वं पश्चात्तव विज्ञातं भविष्यति किल। (रडारिगो प्रस्थितः)

साम्प्रतं कार्यद्वयमवशिष्टम्। मम पत्नी तस्याः प्रभुपत्नीं क्यासिओ-पक्षपातिनीं कृष्णकाय-सकाशेऽनुनयविषये प्रोद्युक्तां करिष्यति। इतो-मध्ये-ऽहमपि कृष्णकायं तस्मिन्नेव समये तत्रानेष्यामि, यत्र क्यासिओ तस्य पत्नी-सकाशे निवेदनं विज्ञापयिष्यति।

जालं मया घटितमेव विमृश्य सम्यक्
किं व्यायते न हि पतेदिह कृष्णकायः।
स्वल्पं भवेद्पकृता यदि तन्नवोढा
मंस्ये तदा पुरुषकारमहं कृतार्थम्॥

इति द्वितीय-दृश्यम्॥

---

## तृतीय-दृश्यम्

( दुर्गमध्यस्थमुद्यानम् )

( प्रविशन्ति डेस्डिमोना क्यासिओ एमेलिया च )

**डेस्डिमोना ।** क्यासिओ महोदय ! भवते प्रतिश्रुतिदीयते, यथाशक्ति भवदर्थमहं यतिष्ये ।

**एमेलिया ।** मातस्तथा भवती करोतु । ध्रुवं जाने, पतिर्मम विशेषान्मर्माहतः—दुर्भाग्यं तस्यैव प्रतीयते ।

**डेस्डिमोना ।** असौ अतीव सज्जनः । ( क्यासिओमुद्दिश्य ) क्यासिओ महोदय ! भवान् निश्चिन्तं तिष्ठतु, अचिरादेवाहं मम पत्युर्भवतश्च पूर्वसौहार्दं पुनर्विनिर्मास्यामि ।

**क्यासिओ ।** कल्याणमयि ! क्यासिओ-नामक-जनस्य अदृष्ट-विधानं यथा तथा वाऽस्तां, भवती जानातु किल, अहं भवत्याश्चिरानुरागी दास एव ।

**डेस्डिमोना ।** अये महोदय ! एतदर्थं धन्यवादार्हो भवान् । भवान् मम पत्युर्विशेषानुरागी, भवता सह परिचयश्च तस्य सुचिरकालव्यापी । ततो निश्चितं जानीहि—नासौ विना कारणं भवन्तं दूरे संस्थापयिष्यति ।

**क्यासिओ ।** भद्रे ! तदहं जाने । तथापि—एतद्यौक्तिकताविषये तस्य बोधो यदि दीर्घायितो भवेत्, यदि वा सूक्ष्म-लघु-विविध-कारणपरिपुष्टः स्यात्, तानि कारणानि च नव-नव-जन्मपरिग्रहणं कुर्युस्तर्हि तत्फलेन ममासन्निधाने अन्यः कश्चन यदि मत्स्थलाभिषिक्तः स्यात् तदा सेनाध्यक्षो मामवश्यं विस्मरिष्यतीति मम भीतिः । पुनः शृणोतु भवती—

तां मत्ततामजनयत् प्रतिकूल-दैवं
नात्रापराध्यति मम प्रकृतिः कथञ्चित् ।
सेनापतेरवगतं तदिदं यथा स्यात्
तत्रैव देयमवधानमलं भवत्या ॥

**डेस्डिमोना।** कमपि सन्देहं हृदि मा पोषयतु भवान्। भवतः स्वीयपदे पुनः स्थापनाय एमेलिया-समक्षमेव प्रतिश्रुतिर्मया दीयते। निश्चितं जानातु भवान्—स्वीकृते कस्यचन बन्धुत्वे तं प्रति कर्तव्यम् अवश्यमेवाहं संसाधयिष्ये। मम पतिमहम् एतदर्थम् अस्थिरतामापादयिष्यामि।

यावत्कालपर्यन्तम् अस्मन्मतानुयायि कर्म नासौ करिष्यति तावदहं तस्य निद्रावाधां विधास्ये। तस्य शय्या भविष्यति पाठागारम् भोजनागारञ्च प्रायश्चित्तालयः। ममावेदनं शतधा कर्मव्यस्तस्यापि तस्य कर्णयुगलोपरि निश्चितं ध्वनितं प्रतिध्वनितञ्च भविष्यति। ततः क्यासिओ महोदय! न भवान् विषण्णतां भजताम्। भवतो व्यवहाराजीवो वरं मरिष्यति, न तु स्वीकृत-कर्तव्यभारं त्यक्ष्यति।

(अन्यतः प्रविशतः ओथेलो इयागो च।)

**एमेलिया।** सेनापतिरित एवायाति।

**क्यासिओ।** ततोऽहं यामि।

**डेस्डिमोना।** न हि, न गन्तव्यं भवता। अत्र स्थित्वा एव भवान् मम वक्तव्यं शृणोतु।

**क्यासिओ।** भद्रे! नाधुना! अहमित्थमस्वस्थोऽस्मि यत् स्वकर्म-करणायाऽहं साम्प्रतम् अनुपयुक्त एव।

**डेस्डिमोना।** यद् भवते रोचते।

(क्यासिओ प्रस्थितः)

**इयागो।** अहो! किमेतत्? नैतन्मह्यं रोचते।

**ओथेलो।** किं भवान् वदति?

**इयागो।** न हि, किमपि न। अथ यदि वा—किं जाने किमेतत्?

**ओथेलो।** मम पत्नीसकाशात् साम्प्रतमेव क्यासिओ निर्गत इति न वा?

**इयागो।** अपि क्यासिओ सः? न हि, अहं मन्ये तथा चेत्, नासौ भवन्तं दृष्ट्वा नीरवं दूरम् अयास्यत्, यथा कश्चन कृतदोषः।

**ओथेलो।** किन्तु मन्येऽसौ क्यासिओ एव।

**डेस्डिमोना।** अये! अत्र पतिर्मे। (तं प्रति) अधुना केनचित् प्रार्थनाकारिणा मम साक्षात्कारो जातः, तवासन्तोषभाजनं जात इति हेतोरसौ जीवन्मृत इव परिलक्ष्यते।

**ओथेलो।** कमुद्दिश्य भाषसे?

**डेस्डिमोना।** असौ तव उपाध्यक्षः क्यासिओ एव। प्रियतम? मम प्राणेश्वर! यदि ममाधिकारः कश्चन त्वयि विद्यते, प्रभावो वा, अयं मेऽनुरोधः त्वं तस्यावेदनं गृहाण, तस्य सौहार्दं पुनः स्वीकुरु। तस्य क्यासिओ-महोदयस्याकपट-वदनश्रियं दृष्ट्वाऽहं स्थिरनिश्चया जाता यदसौ त्वां प्रति स्वत एवानुरक्तः दोषश्चास्याज्ञताजनित इति। ततः प्रार्थये, तेन सह तव साक्षात्कारोऽचिराद् घटताम् इति।

**ओथेलो।** साम्प्रतमेवासौ स्थानादस्माद् वहिर्गतः किमु?

**डेस्डिमोना।** अथ किम्, स एव। दुःखेन स ईदृश-म्रियमाणो जातो यत्तस्य दुःखस्य भारं कंचिद् मय्येव न्यस्तवान्। तस्य दुःखस्यांशिनी अहमपि। प्रियतम! तस्मै पुनरागमनाय वार्तां प्रेषय।

**ओथेलो।** न हि न हि। नाधुना, समयान्तरे तद् भविष्यति।

**डेस्डिमोना।** अपि तत् त्वरितं भविता?

**ओथेलो।** यदि त्वरितं तत् कुर्यां निश्चितं तत् त्वदर्थमेव भविष्यति।

**डेस्डिमोना।** अद्य रात्रौ आहार-समये?

**ओथेलो।** न हि, नाद्य।

**डेस्डिमोना।** तर्हि आगामिनि दिवसे मध्याह्न-भोजन-समये?

**ओथेलो।** श्वो मध्याह्न-भोजनं मया नात्र करणीयम्। दुर्गे उच्च-पदासीन-कर्मचारिभिः सह साक्षात्कारव्यवस्था स्थिरीकृता।

**डेस्डिमोना।** भवतु तावत्, तथा सति श्वो यामिन्याम् अथवा मङ्गलवासरे प्रातः—मध्यन्दिनसमये—रात्रौ—बुधवासरीय-मध्याह्ने वा। कथमपि दिवसत्रयं न यापयितव्यम्। सत्यं ब्रवीमि असौ साम्प्रतमनुतप्त एव।

पुनरपि पश्य, सत्यं तस्यापराधो लघुरेव। ततः संगोपनम् अस्य तिरस्कारो विधेय आसीत्। अवश्यं जाने, युद्धकाले दृष्टान्त-स्थापनाय सज्जनस्यापि शास्तिरवश्यं विधेया। यथा तथा वा भवतु, वदतु भवान् कदा स आगमिष्यति। अहं केवलं चिन्तयामि ओथेलो! अपि किञ्चित्तथा वर्तते, यन्नाहं तुभ्यं दातुं समर्थाऽस्मि ? किं त्वद्वद्दण्डायमानाऽहं स्वल्प-मृदु-भाषणं करिष्यामि ? किं वदसि नाथ ?

एष स एव माइकेल क्यासिओ यस्त्वत्पक्षतो मत्समीपे प्रेमवार्तामाहरत्, त्वत्पक्षमनवलम्बमानायै मह्यं तव हितकामनया किं किं वा नावेदयत् ? अथ चाद्य तस्य हेतोर्मया एतादृशोऽनुरोधः करणीयः किल ? यीशुमातृनाम्ना शपथो मया क्रियते—अहं चेत्तु म् अभविष्यम् नूनमत्र बहु कर्तुं समर्थाऽभविष्यम्।

**ओथेलो।** बहु भाषितं त्वया। यथेच्छं त्वं तमत्रानय। तवानुरोधः कोऽपि न मयाऽस्वीकार्यः।

**डेस्डिमोना।** निश्चितं नैषोऽनुग्रहो मयि त्वया प्रदर्श्यते।

**ओथेलो** न कश्चनापि तवानुरोधो मया प्रत्याख्यातो भविष्यति इति प्रतिज्ञां कृत्वा प्रार्थये—कियत्कालपर्यन्तमेकाकिना मया भाव्यम्।

**डेस्डिमोना।** किमहं कदाचनास्वीकुर्वाणा भवेयम् ? ततो भवन्तं विदायं याचे।

**ओथेलो।** विदायः डेस्डिमोने! अहं त्वत्सकाशे एव प्रत्यावर्तिष्ये।

**डेस्डिमोना।** यथेच्छं भवान् करोतु। यथा तथा वा भवान् करोतु नाम, अहं तवानुगता एव। (एमेलियया सह डेस्डिमोना प्रस्थिता)

**ओथेलो।** अनिर्वचनीया नारी। यदि वा नरकवासी भवेयं तथापि तव प्रेमाधीरो वर्तेय। अन्यथा सर्वमेव विशृङ्खलं प्रतिभाति।

**इयागो।** महानुभव !

**ओथेलो।** किमपि वक्तुकामोऽसि ?

**इयागो।** यदा भवान् पत्न्या हृदय-जयव्रती आसीत्, किं क्यासिओ तदा सर्वं तद्वृत्तान्तमजानात् ?

**ओथेलो।** निश्चितं सर्वं तस्य परिज्ञातमासीत् आदितः अन्तपर्यन्तम्। किन्तु कस्ते जिज्ञासाहेतुः ?

**इयागो।** किमपि अहमचिन्तयम्। नास्ति तत्र मे कोऽपि दुष्टाभिलाषः।

**ओथेलो।** किं त्वं चिन्तयसि ?

**इयागो।** अस्य अनया सह परिचय आसीदिति न मे परिज्ञातम्।

**ओथेलो।** न केवलः परिचयः, आवयोरसौ दूत इवासीत्।

**इयागो।** आम्! अप्येवम् ? अप्येवम् ?

**ओथेलो।** ततो ज्ञातुमिच्छामि, अपि न स विश्वसनीयः ?

**इयागो।** कथं जानामि ?

**ओथेलो।** किन्तु किं त्वं मन्यसे ?

**इयागो।** अहं मन्ये ?

**ओथेलो।** "अहं मन्ये" ! भो भगवन् ! एष जनः सर्वदा मद्वचसः प्रतिध्वनिं करोति। निश्चितं भयंकरं किमपि असौ चिन्तयति, यत् प्रकटयितुं नासौ समर्थः। इयागो ! यदा क्यासिओ मत्पत्नी-सकाशाद् विदायमयाचत, तदा त्वमवादीः न तत् ते सम्मतम् इति। पुनर्यदा-ऽहमवदम् आवयोः प्रेम-विषय उपाध्यक्षस्य सर्वथा परिज्ञात इति—तदा त्वमवादीः "तस्मात्तदेव" इति। तव भ्रूकुञ्चन-पद्धति-मध्येऽपि राजते किमपि भयङ्करत्वम्। यदि सत्यं मामाद्रियसे तव भावना-विनिमयेन मां प्रसादय।

**इयागो।** महामान्य ! भवान् जानाति, भवन्तं प्रति मम प्रीतिरगाधा एव।

**ओथेलो।** त्वामाद्रिये इति विश्वसिमि किल। यतो मां प्रति तव प्रीतिविषये नास्ति मम सन्देहः, पुनस्त्वं सर्वदा गम्भीर-चिन्ता-प्रसूतं वचो भाषसे, ततो द्विधा तव मां विस्मापयते।

**इयागो।** अपि या चिन्ता जघन्या, साऽपि प्रकटयितव्या। को नाम राजप्रासादो यत्र कदर्यता कदापि नात्मप्रकाशं लभते ! पुनः को नाम स

जनः यस्य हृदि कुचिन्ता न्याय्य-ध्यान-धारणादिभिः समस्थानाधिकारिणी न कदाचन राजते ?

**ओथेलो।** बन्धुस्तेऽत्याचारित इति ज्ञात्वाऽपि यदि त्वं मनोभावं न करोषि व्यक्तं; तदा बन्धुं प्रत्यन्याय्यमेवाचरितं त्वया ध्रुवम्।

**इयागो।** सानुनयं वदामि, ममानुमानं सन्देहदुष्टं भवेद्वा। एतदपि मया स्वीक्रियते यदहं सर्वदा परच्छिद्रान्वेषी, स्वभावविड़म्बना एव सा मे। ईर्ष्याऽपि ममासत्यं सत्यापयतीव—ततो मादृशजनस्यासम्पूर्ण-चिन्तां पूर्णतया संयोजयतु भवान्। ममासङ्गतम् अनिश्चितं पर्यवेक्षणमाश्रित्य भवान् मा करोतु निजाशान्तिसृष्टिम्। भवते सा चिन्ता न विज्ञापनीया, या न भवतः शान्ति-मङ्गलदायिनी मम वा मनुष्यत्व-सतता-सुचिन्ता-विकाशिनी।

**ओथेलो।** अये! को भाषणस्य तवार्थः ?

**इयागो।** यशः किल नारीणां पुरुषाणां वा परमप्रियम् अन्तरस्य श्रेष्ठा सम्पत्। यदि कोऽपि मम वित्तकोशमपहरति, तुच्छातितुच्छं द्रव्यं तेनापहृतमिति ध्रुवमेव। तेन का नाम क्षतिः।

यन्ममासीत्तत्तस्यायत्तीभूतम्, इतः पूर्वं तद्वित्तमन्येषां बहूनां दास्यमभजत। किन्तु यो मम यशोऽपहरति स तादृशं वस्तु गृह्णाति येन स न धनी भवति, किन्तु मां करोति सर्वस्वहीनम्।

**ओथेलो।** तव चिन्ताराशिं निश्चितमहं जानामि।

**इयागो।** यदि मम हृत्पिण्डं भवतो मुष्टेरन्तर्गतमपि स्यात् तथापि भवान् कदापि न मम मनोवार्त्तां ज्ञास्यति।

( स्वगतम् ) अहो! अनवधानेन किं मयोक्तम्! अथवा अलं चिन्तया।

**यन्मे मुखाद् विगलितं ध्रुव-सत्यमेतज्-**
**जाने न तेन खलु तस्य भवेदवज्ञा।**
**श्रद्धावशो मयि शठेऽपि विशेषतोऽयं**
**संमस्यते सरलतेति विवेकवीतः॥**

**ओथेलो।** किं ते वक्तव्यं नाम ?

**इयागो।** ईर्ष्याविषये सतर्कताऽवलम्बनीया। असौ हरिताक्ष-दानव इव भक्षितं जलं कुत्सयति। असतीपतिर्निज-दुरदृष्टं ज्ञात्वा यदि पत्नीं नाद्रियते, स कथञ्चित् सुखं वसति। किन्तु अहो दुर्भाग्यं तस्य यो नितराम् आद्रियते अथच सन्देहं पोषयति; सन्देह-पोषणं करोत्यथ चाद्रियते। प्रतिमुहूर्तं नरक-यन्त्रणा तं पीड़यति।

**ओथेलो।** अहो असहनीयं कष्टं तादृश-जनस्य।

**इयागो।** दरिद्रोऽपि सन्तुष्टो जनः सत्यं धनी। दारिद्र्यभीतो जनो-ऽगाधसम्पत्तेरधीश्वरोऽपि हिमर्तुरिव सर्वस्वहीनः। करुणामय भगवन्! पूर्वपुरुष-पुण्यात्मा भवन्तमीदृश-कष्टाद् रक्षतु नाम।

**ओथेलो।** किमुद्दिश्य भवान् इत्थं कथयति? इयागो! डेस्डिमोना-प्रियां प्रति सन्देह-पोषणात् प्रागेव सन्देहो मया प्रमाणीकरणीयः। सन्देहे प्रमाणीकृते पन्थाः स्यात् केवलमेक एव, ईर्ष्या-प्रणयादिकं चिराय लोपं यास्यति।

**इयागो।** एतज्ज्ञात्वा प्रभूतमानन्दम् अनुभवामि। यतः तेन भवन्तं प्रति मम प्रेमसीमराहित्यं प्रमाणीभविष्यति। कर्तव्यपरायणस्य मम वचः भवतो हितायैव स्यात्। प्रमाणं मया नोपस्थाप्यते, तथापि भवतः पत्नी-विषये भवतः सतर्क-दृष्टिं प्रार्थये, विशेषेण क्यासिओ-सङ्गकारिण्यास्तस्याः। केवलं—कठोरमनोनिवेशेन परीक्षणीया सा, विश्वासोऽविश्वासो वा पश्चादा-श्रयणीयः स्याद्भवता। भवत उदार-प्रकृतेः सुयोगं कोऽपि गृह्णीयाद् इति न मया सहनीयम्। अत एव भवतो मनोयोगमाकर्षामि। मम स्वदेशवासि-चरित्रम् अहं विशेषेण जाने। स्वपतिसकाशे यानि अपकर्माणि ता न प्रकटयितुं समर्थास्तानि सर्वाणि ताः समाचरन्ति भवच्चक्षुःसकाशे। असदाचरणे न तासां भीतिः, केवलं जना न जानीयुरिति तासां चिन्ता-कारणम्।

**ओथेलो।** इदमेव तव मतम्?

**इयागो।** भवतः पत्नी पाणिग्रहण-समये पितृचक्षुः-प्रतारणं विहितवती।

भवन्तं दृष्ट्वा यदा तया भीत-चकितया विशेषेण भाव्यं तदैव सा भवन्तं प्रति प्रणयं विज्ञापितवती।

ओथेलो। एतत्तु सत्यमेव।

इयागो। ततः सर्वं विवेचनीयं भवता।

ओथेलो। चिरकृतज्ञोऽहम्।

इयागो। भवान् मद्वचसा विषण्ण इव जातः ?

ओथेलो। न तिलमात्रम्।

इयागो। सत्यं बिभेमि भवान् क्षुब्धोऽस्ति इति। किन्तु भवन्तं प्रति ममागाध-प्रीतिरेव तत्र कारणम् इति निश्चितमेव जानीहि।

ओथेलो। नाहं विचलितोऽस्मि। मन्ये डेस्डिमोना सुचरित्रा।

इयागो। तस्याः सुचरित्रं भवतश्चागाध-विश्वास उभयमहं प्रार्थये।

ओथेलो। किन्तु जना यदि स्वभावं विहाय—

इयागो। महोदय ! तदेव निश्चितं चिन्तनीयम्।

ओथेलो। यदि इतोऽभ्यधिकं किमपि तव दृष्टेर्गोचरीभूतं जायेत, निश्चितं तद् विज्ञापनीयोऽहम्।

तव स्त्री विषयेऽस्मिन् अस्माकं साहायकं विदधातु। इयागो ! तत् त्वं गच्छ।

इयागो। प्रभो ! विदायं याचे। (इयागो प्रस्थितः)

ओथेलो। कथमहमुद्वाहबन्धनं स्वीकृतवान् ? जनोऽयं प्रकृतिसुन्दरः। निश्चितमेष विषयान्तराणि जानाति किन्तु मह्यं न विज्ञापयितुं वाञ्छति।

इयागो। (प्रत्यावृत्य) महामान्य ! एतद्विषये भवान् न समधिक-चिन्तान्वितो भवतु। कालमेव बलवन्तं जानातु। यद्यपि क्यासिओ तस्य स्वस्थाने पुनरधिष्ठितः स्यात् यतः स स्वकर्माणि सुष्ठु संपादयति, तथापि कियद्दिवसान् स दूरे स्थापनीयः खलु। तदवसरे भवान् तस्य चरित्रादिकं परीक्षितुं समर्थो भविष्यति, भवतः पत्नी तस्य पुनर्नियोगाय प्रयत्नाधिक्य-प्रदर्शनपूर्वकम् अनुचितोत्साहं प्रकटयति वा न वा तदपि ज्ञास्यति। इतो

मध्ये भवतो मनः शान्तिमाप्नोतु। अहं मत्सन्देहं सीमातीतं प्रकटितवान्। ततो भवतः पत्नी स्वैरं चरतु इति मम प्रार्थना।

**ओथेलो।** सा मया शासितव्येति न चिन्तनीयम्।

**इयागो।** ततोऽहं विदायं याचे। (प्रस्थितः)

**ओथेलो।** अतीव सज्जनोऽयं, तथा परचरित्र-विश्लेषण-विचक्षणोऽपि। यदि सा श्येनपक्षिणीव दुष्पोष्या स्वीयमुक्तिं वाञ्छति, मम हृदयतन्त्रीभिर्बद्धा अपि मुक्तगगने सा विचरतु स्वाधीनेच्छया, स्वाभिलषित-ग्रासोपरि वायुगत्या पततु च। अहं कृष्णकायः तथा नाहं मनोहर-वाचन-भङ्ग्यभ्यस्तोऽधिकवयस्कोऽपि, यद्यपि एतद्वयो न तथा परिगणनीयं—इत्यादिकं परिचिन्तयन्ती सा मामुपेक्षतां नाम। तस्या उपेक्षाविनिमयेन साऽपि मयोपेक्षणीया। तदेवास्तां मम सान्त्वनाकारणम्। अये डेस्डिमोना इत आयाति।

(एमेलियया सह डेस्डिमोना आयाति)

**डेस्डिमोना।** ओथेलो प्रियतम! कीदृशमाचरणमेतत्तव। द्वीपस्यास्य सर्वे गण्य-मान्यजना निमन्त्रिताः। सर्वे खाद्येन सह त्वामपेक्षन्ते।

**ओथेलो।** अहो दोषोऽयं ममैव।

**डेस्डिमोना।** कथं क्षीणकण्ठेन वक्ति भवान्! अपि शरीरं तव स्वस्थतां न भजते?

**ओथेलो।** भालपीड़ा मां बाधते।

**डेस्डिमोना।** अधिक-रात्रिजागरण-फलमिदम्। भवतु अचिरादेव रोगमुक्तो भविष्यसि। मन्मुखमार्जनीमाहायकेन पीडास्थलं ते आच्छादयामि, घटिकाभ्यन्तरे रोगमुक्तिरवश्यम्भाविनी। (मुखमार्जनीं ददाति)

**ओथेलो।** तव मुखमार्जनी सातिशय-क्षुद्राकृतिः।

(मुखमार्जनीं कियद्दूरे रक्षति सा चाधः पतति।)

सा तत्रैव तिष्ठतु; त्वया सह गच्छाम्यहम्।

**डेस्डिमोना।** अस्वस्थोऽसि इति ज्ञात्वा नितराम् उद्विग्नास्मि।

(प्रस्थितौ ओथेलो डेस्डिमोना च।)

एमेलिया। (मुखमार्जनीं गृहीत्वा) मुखमार्जनीं लब्ध्वा परं हृष्टास्मि। कृष्णकायोऽध्यक्षवरः पत्न्यै प्रथमोपहाररूपेण इमां ददौ। सोऽस्या रक्षणाय अनुरुद्धवान् इति हेतोर्मम प्रभुपत्नी इमां प्राणपण-यत्नेन न केवलं रक्षति, तां चुम्बति तया वचनविनिमयं च करोति।

स्वेच्छाचारी मम स्वामी अस्या हरणाय मां शतशोऽनुरुद्धवान्। अस्याः शिल्पकार्यं वहिर्निष्काश्याहं पत्ये दास्यामीमाम्। भगवान् जानाति तस्यैतया किं प्रयोजनमिति। केवलं तस्य कल्पनाचरितार्थतायै तस्मै अहमिमां दास्ये।

(पुनः प्रविशति इयागो)

इयागो। एकाकिनी त्वमत्र किं करोषि?

एमेलिया। मा मां तिरस्कुरु। तुभ्यं देयं मम किञ्चिदास्ते वस्तु।

इयागो। मह्यं देयम्? साधारणं वस्तु किल।

एमेलिया। अये! किं ब्रवीषि?

इयागो। मूर्खस्त्री! ततः किमन्यदाशंसनीयम्?

एमेलिया। तदेव केवलम्? किन्तु किं मह्यं दास्यसि यदि तुभ्यं तन्मुखमार्जनीं ददामि।

इयागो। का नाम सा मुखमार्जनी?

एमेलिया। का नाम? यां डेस्डिमोनायै प्राथम्येन कृष्णकायो ददौ। यस्या हरणाय त्वं मां शतशोऽनुरुद्धवान्।

इयागो। अपि साऽपहृता?

एमेलिया। नहि, नहि। तस्याः करात् अपगतेयं तत्र स्थितया मया परिगृहीता। पश्य तामिदानीम्।

इयागो। अहो चित्तहरा रमणी त्वम्। मह्यं देहि।

एमेलिया। अपहरणपूर्वकं मुखमार्जनीमिमामानेतुं त्वयाऽहमादिष्टा, अनया तव किम्?

इयागो। (सबलं प्रगृह्य) कथम्? तेन तव किम्?

**एमेलिया।** यदि न प्रयोजनाधिक्यं मह्यमेतां प्रत्यर्पय। अहो भाग्यहता सा अस्या अभावेन उन्मत्ता संजनिष्यते।

**इयागो।** न त्वं ज्ञातुं शक्ष्यसि ज्ञापयितुं वा शक्ष्यसे। अनयाऽस्ते मम प्रयोजनम्। अधुना प्रतिष्ठस्व। (एमेलियायाः प्रस्थानम)

(मुखमार्जनीं प्रसार्य पश्यन्) अहो नु खलु भोः!

**पुरैव हृदयङ्गमा तदनु वृत्तपाणिग्रहा**
**प्रियेव मुखमार्जनी मम धिनोति सेयं मनः।**
**सती बहुगुणान्विता विगतभाग्य-भर्तुर्यथा**
**विधास्यति मम ध्रुवं निजगुणेन भाग्योदयम्॥**

मुखमार्जनीमिमामहं क्यासिओ-महोदयस्य गृहे संस्थापयिष्यामि। ततः स इमां प्राप्स्यति। वायुवदसारं वस्तु तदपि ईर्ष्याकातर-जनाय शास्त्र-वाक्य-वदभ्रान्तं प्रतिभाति। मुखमार्जनीयं मम साहायकाय भविष्यति।

अये! ओथेलो इत आयाति।

(पुनः प्रविशति ओथेलो)

**ओथेलो।** अहो सत्यं सा मिथ्याचारा।

**इयागो।** सेनाध्यक्ष-महोदय! किं घटितम? न तद्विषये काचन चिन्ता कार्या।

**ओथेलो।** दूरं याहि; दूरं याहि! त्वं मां निष्पेषण-यन्त्रे स्थापितवान। शपथपूर्वकं वदामि स्वल्पज्ञानतः चूड़ान्त-प्रतारणाऽपि वरम।

**इयागो।** प्रभो! किं भवान् वदति?

**ओथेलो।** अस्या गुप्त-प्रेम्णो लेशमात्रम् अपि न मे परिज्ञातमासीत्।

**इयागो।** अहं सुस्पष्टं जाने भवान् ईर्ष्या-विष-जर्जरित इति। भवतो दृष्टिमाकृष्य सत्यमहमनुतप्तोऽस्मि। ध्रुवं प्रमाणं किं भवान् वाञ्छति?

**ओथेलो।** अहो मृत्युयन्त्रणा! अहो नरकज्वाला, ध्रुवं प्रमाणं त्वयाऽवश्यमेव देयम्।

**इयागो।** कर्तव्यमेतन्न मे रुचिकरम्। तथापि इत्थमग्रेसरीभूय न मया पश्चादपसरणीयम। सम्प्रति एकस्यां रजन्यामहं क्यासिओ-महोदयेन

महास्वपम्। दन्तशूल-पीड्यमानस्य मे निद्राऽसीद् दूरं गता। केचन तथा विद्यन्ते ये तेषां गोपनीयतममपि वस्तु सुप्तावस्थायां वदन्ति किल। तेषामेकतम एष क्यासिओ गभीरे निशीथे निद्रामग्न इत्थं वदति स्म—"प्रियतमे डेसडिमोने सावधाना भव। आवयोः प्रेम न कस्यचन परिज्ञातं स्यात्"।

**ओथेलो।** अहो गुरुत्वं विषयस्य! अहो भयङ्करत्वम्! हतभाग्यामिमामहं खण्डशः कुट्टयिष्यामि।

**इयागो।** नहि, न झटिति कर्म करणीयम्। अपि भवता कदाचन भवतः पत्न्या हस्ते "स्ट्रबेरि" चिह्नितां मुखमार्जनीं न दृष्टवान्?

**ओथेलो।** तादृशी काचन मुखमार्जनी मयैव तस्यै प्रथमोपहाररूपेण दत्ताऽसीत्।

**इयागो।** तन्मया ज्ञातम्। तादृश्या कयाचन मुखमार्जन्या—भवतः पत्न्या इयमिति स्थिरनिश्चयोऽहं—क्यासिओ-महोदयं वदन-मण्डलं परिमार्जयन्तमद्य दृष्टवान्।

**ओथेलो।** यदि सा स्यात्?

**इयागो।** मा भवतु अन्या वा—यदि मुखमार्जनी काचनापि क्यासिओ-महोदयाय तया दत्ता भवेत् निश्चितं तदन्यान्य-प्रमाणैः सह तद्विपक्षे प्रमाणान्तर-रूपेण गण्यं स्यात्।

**ओथेलो।** रक्तं वाञ्छाम्यहं, रक्तम्।

**इयागो।** धैर्यमवलम्बनीयं भवता। मनसः परिवर्तनं स्याद् वा भवतः।

**ओथेलो।** कदापि न। कृष्ण-सागरस्य हिमशीतल-दुर्वारजलस्रोतो जलह्रास-समयेऽपि न पश्चादपसरति तत् पुनर्मर्मरसागरं तथा "दार्दानेलिस्"-प्रणालीमभिलक्ष्य पुरत एव धावति। तद्वन्ममेयं हत्याभिलाषिणी चिन्ता यावत् प्रतिहिंसाया विकट-वितत-वदनमण्डलं प्रविश्य कार्यं आत्मप्रकाशं न करिष्यति, तावत्तस्या गतिर्भविष्यति दुर्मद-दुर्वारा, न सा पश्चादपसरिष्यति, दुर्बल-जलह्रास-योगेन न वा कदाचन पश्चादागमिष्यति। अये प्रस्तर-कठिने

स्वर्गपुरि ! (नतजानुरुपविश्य) पूत-प्रतिज्ञा-ग्रहणोपयोगि-श्रद्धान्वित-चित्तोऽहम् इमां शपथ-वाणीमुच्चारयामि ।

**इयागो ।** क्षणं तिष्ठतु भवान् । (नतजानुः) भो ऊर्ध्वाकाश-चिरभास्वरालोकराशे ! भोः परिवेष्टनकृद् वस्तुपुञ्ज ! सर्वेषां भवतां साक्ष्यं याचे । इतः प्रभृति इयागो तस्य बुद्धि-हस्त-हृदयानि अन्यच्च सर्वं व्यवहरिष्यति केवलं ओथेलो-महोदयस्य सेवार्थमेव । सेनाध्यक्षमहोदयः केवलं मामादिशतु नाम । स आदेशः अवश्यमेव मया परिपालयितव्यो भविष्यति, यथा तथा वा भवतु तस्य नैष्ठुर्यम ।

[ उभौ उत्थितौ ]

**ओथेलो ।** तव प्रेमाहमभिनन्दामि । सा भ्रष्टचरित्रा निपातं यातु । मया सह स्थानान्तरमायाहि । तस्याः सुन्दर्या असुर्या मृत्योर्द्रुतमुपायं कंचनाहम् अवश्यमेवाविष्करिष्यामि । अतः प्रभृति त्वमेव मम महाध्यक्षो भविष्यसि ।

**इयागो ।** अहं चिराय भवत एव । (उभौ प्रस्थितौ)

इति तृतीय-दृश्यम्

---

## चतुर्थ-दृश्यम्

(प्रविशतः डेसडिमोना एमेलिया च)

**डेसडिमोना ।** एमेलिये ! कुत्र मे मुखमार्जनी गता स्यात् ?

**एमेलिया ।** महाशये ! न तन्मे विदितम् ।

**डेसडिमोना ।** विश्वसिहि, इतः सुवर्ण-मुद्रापूर्ण-कोशलोपोऽपि मम वरमासीत् । यदि "मुर" महोदय उदारप्रकृतिर्नाभविष्यत्, यदि साधारण-जनवदीर्ष्यापरायण-नीचस्वभावोऽभविष्यत् एष व्यापारस्तस्य मनसि सन्देहो-द्रेकाय पर्याप्तोऽभविष्यत् ।

**एमेलिया।** अपि स नेर्ष्याकातरः ?

**डेस्डिमोना।** कः ? तत्रभवान् ? मन्ये यस्मिन् देशे तस्य जन्म, सूर्यो देवोऽस्य मनसः तादृशं वृत्तिनिचयं शोषितवान्।

**एमेलिया।** पश्य ! तत्रभवान् समायातः।

**डेस्डिमोना।** यावत् क्यासिओ-महोदयं नासौ आह्वयति, तावन्नाहं विरमामि।

( प्रविशति ओथेलो )

**डेस्डिमोना।** नाथ ! कीदृशोऽसि ?

**ओथेलो।** प्रिये ! स्वस्थतां भजे। ( स्वगतम् ) अहो ! कठोरः खलु कपटाचारः ! ( डेस्डिमोनामुद्दिश्य ) त्वं कीदृश्यसि ?

**डेस्डिमोना।** प्रियतम ! अहं स्वस्थाऽस्मि।

**ओथेलो।** प्रिये ! करं ते मह्यं देहि। ( करं गृहीत्वा ) हस्तोऽयमार्द्र एव।

**डेस्डिमोना।** वयःकठोरस्पर्शो नात्र लग्नः, दुःखभोगोऽपि नास्य परिज्ञातः।

**ओथेलो।** सम्भोगप्रियता बन्धनहीन-मनसः परिचयोऽप्यनेन सूच्यते। तप्तः, तप्तार्द्रः करः, ईदृशः करः अपेक्षते स्वाधीनताया निर्जनतायां निर्वासनम्, उपवासं प्रार्थनां तिरस्कारं व्रताचरणञ्च। यतः करेऽस्मिन् वसति तरुणोऽशान्तः जघन्यो जनः यो विद्रोहं घोषयति। उत्तमोऽयं करः सरलः स्पष्टः।

**डेस्डिमोना।** तन्निश्चितं वक्तुं शक्यते। यतोऽनेनैव करेण मम हृदयमहं समर्पितवती।

**ओथेलो।** समुदारोऽयं हस्तः। तेषु दिवसेषु मनो हस्तं सम्प्रासारयत्, आधुनिके युगे हस्त एव हस्तं संप्रसारयति, न मनः।

**डेस्डिमोना।** विषयेऽस्मिन् नाहं किमपि जाने। साम्प्रतं प्रतिश्रुतिस्त्वया पालनीया।

**ओथेलो।** प्रिये ! का नाम सा ?

**डेस्डिमोना।** त्वया सह समालपनाय अहं क्यासिओमाहूतवती।

**ओथेलो।** भृशं शीतार्तोऽस्मि। तव मुखमार्जनीं मह्यं देहि।

**डेस्डिमोना।** सेयम्। (मुखमार्जनीं ददाति)

**ओथेलो।** या मुखमार्जनी मया तुभ्यं दत्ता, सैव दातव्या।

**डेस्डिमोना।** नाधुना तां दातुमस्मि समर्था।

**ओथेलो।** अपराधोऽयं खलु। काचन मिशर-वासिनी मम जनन्यै मुखमार्जनीमिमां दत्तवती। साऽमीत् काचन कुहकिनी या मनुष्याणां हृद्वाणीं वक्तुं समर्थासीत्। सा मम मातरमवदत् रक्षितायां तस्या मुखमार्जन्यां मम पिता तस्याः पूर्णायत्तो राजिष्यते अन्यथा भिन्नप्रेमपात्रमन्वेषिष्यति। मम माता पुनर्विशेषोपदेशेन परमाशया मृत्युसमये मह्यं तां दत्तवती आदिदेश च "विवाहसमये सेयं मत्पत्न्यै दातव्ये"ति। तथा च मया कृतम्। सा परमादरेण मया संरक्षिता; तव सुन्दराक्षिद्वयीमिव आदरणीयामिमामहं पर्यगणयम्। ईदृश्या मुखमार्जन्या विलोपनं परस्मै दानं वा चरम-सर्वनाशाय भविष्यति।

**डेस्डिमोना।** अपि तदपि संभाव्यते?

**ओथेलो।** सत्यम् अतीव सत्यम्।

**डेस्डिमोना।** वदामि किल, सा न नष्टा।

**ओथेलो।** तद् आनय। मां प्रदर्शय।

**डेस्डिमोना।** तत् कर्तुं शक्नोमि किन्तु न साम्प्रतम्। ममानुरोध-विशेष-प्रत्याख्यानाय अयमेवोपायस्त्वया निर्धारितः। त्वयि मे महाननुरोधः, क्यासिओ एव पुनर्ग्रहणीय इति।

**ओथेलो।** मह्यं मुखमार्जनीं देहि। मनो मम सन्देहदोलारूढं वर्तते।

**डेस्डिमोना।** दूरे कुरु मुखमार्जनीप्रसङ्गम्। निश्चितं जानीहि क्यासिओतः योग्यतरो जनो न मिलिष्यति ध्रुवम्।

**ओथेलो।** मुखमार्जनीमानय।

**डेस्डिमोना।** ममायमनुरोधः—क्यासिओ-विषये मां निश्चितं किमपि ब्रूहि।

**ओथेलो।** मुखमार्जनीमानय।

**डेस्डिमोना।** वस्तुतस्तु दोपस्तवैव।

**ओथेलो।** दूरं याहि। (प्रस्थितः)

**एमेलिया।** अपि एष जनो न ईर्ष्याकातरः?

**डेस्डिमोना।** नासौ कदाचनेदृशो दृष्टः। निश्चितं मुखमार्जन्यामस्यां राजते काचन मायाशक्तिः। तस्या लोपहेतोः भृशं क्लिष्टाऽस्मि।

**एमेलिया।** वर्षेण वर्षद्वयेन वा न पुरुषः कश्चन परिज्ञातव्यः। पुरुषाणां क्षुधा महती, वयं केवलं खाद्यम् गोग्रासैर्वयं गिलिता भवामः। पुनरुदरपूर्तेरनन्तरमेव वमनं वाञ्छन्ति ते। पश्यतु भवती, क्यासिओ-महोदयो मम पतिश्च इत एवायातः।

(प्रविशतः क्यासिओ तथा इयागो)

**इयागो।** नास्ते उपायान्तरम्। इदं सर्वं तथैव करणीयम्। अहो सौभाग्यम्। तत्सकाशे पुनरपि कुरु आवेदनम्।

**डेस्डिमोना।** साधो क्यासिओ! कीदृशोऽस्ति भवान्? का वार्ता भवतः?

**क्यासिओ।** भूयोऽपि मम प्राचीनावेदनमुपस्थापयामि। अनुरोधोऽयं मे, भवत्याः सत्प्रचेष्टया अहं पुनः प्रतिष्ठितो भवेयम्। पुनः पूर्णसम्मानस्तस्मै विज्ञापनीय इति हृदयं मम सूचयति, ततस्तस्य प्रीतिभाजनम् अहं भवेयम्।

**डेस्डिमोना।** अहो क्यासिओ-महोदय! ममावेदनं साम्प्रतं जातं मूल्यहीनम्। मम प्रभुः भिन्नो जन इव संवृत्तः। यदि तस्य मतिरिव तस्य रूपमपि परिवर्तनम् अभजिष्यत, तस्य स्वरूपमपि ममापरिज्ञातमभविष्यत्। क्यासिओ-महोदय! यथासाध्यमहं यतिष्ये। साहसमतिक्रम्यापि करिष्यामि वा। एतदेव भवता यथेष्टं परिगण्यताम्!

**इयागो।** अपि प्रभुरस्माकं क्रोधमापन्नः ?

**एमेलिया।** अधुनैव स्थानादस्मात् भृशं चाञ्चल्यं प्रकटयन् वहिर्गतः।

**इयागो।** अहो अध्यक्षस्यापि क्रोधः। तथा चेत् किमपि गुरुतरं संघटितम्। साक्षात्कारं झटित्यहं करिष्ये।

**डेस्डिमोना।** भवान् अधुनैव तथा करोतु।

(इयागो प्रस्थितः)

**डेस्डिमोना।** निश्चितं राष्ट्रियः कश्चन व्यापारः प्रभुं मम व्याकुलयति।

**एमेलिया।** भगवदिच्छया तथैव भवतु। न स भवत्यां कथमपि विरूपो भवतु।

**डेस्डिमोना।** अहो दुःखमयो दिवसः! न तस्मै किमपि तादृशं कारणं मया उपस्थापितम्।

**एमेलिया।** किन्तु ईर्ष्यापरायणस्य न कारणेन प्रयोजनम्। ईर्ष्यायै ईर्ष्या। तस्य ईर्ष्यादानवः स्वयं जातः, स स्वयं स्वस्य पिता माता च।

**डेस्डिमोना।** तादृशं दानवं भगवान् मम पत्युर्हृदये न संस्थापयतु।

**एमेलिया।** भद्रे! तथैव भवतु।

**डेस्डिमोना।** तस्यानुसन्धानाय वहिर्यामि। क्यासिओ महोदय! भवानत्र परिभ्रमतु। सम्भवे सति, भवत आवेदनपरिपूर्त्यर्थं यथासाध्यं यतिष्ये।

**क्यासिओ।** विनीतस्य मम धन्यवादान् परिगृह्णातु भवती।

(एमेलिया डेस्डिमोना च प्रस्थिते)

[प्रविशति वियानका]

**वियानका।** प्रिय क्यासिओ! भगवान् तव मङ्गलं विदधातु।

**क्यासिओ।** किं प्रयोजनं त्वां गृहाद्वहिरानयत्? सुदर्शने वियानके! का तव वार्ता? विश्वसिहि, अहं तव गृहाभिमुखं गच्छामिस्म।

**वियानका।** क्यासिओ! अहं पुनस्तव गृहगमनाय वहिरागता! सप्ताहं व्याप्य दूरे वर्तसे, किन्तु कथम्? सप्त दिनानि रात्रयश्च। षष्ट्युत्तर-शतघण्टाः?

विरह-कातरपक्षे पुनस्ता घटिकायन्त्र-घण्टाभ्योऽपि किं नाधिक-विरक्तिकारिण्यः ? अयं गणना क्लान्तिकरी !

**क्यासिओ।** वियानके ! मां क्षमस्व। साम्प्रतमहं सीसकवद्-भाराक्रान्तोऽस्मि चिन्तया। अतः परं निरवच्छिन्नोपस्थित्या अनुपस्थिति-दोषं परिहरिष्यामि। वियानके ! ( तस्यै डेस्डिमोनाया मुखमार्जनीं दत्त्वा ) अस्या मुखमार्जन्या आदर्शमनुसृत्य पुनरेकां नवीनां कुरु।

**वियानका।** क्यासिओ ! कस्मादागता इयम् ? निश्चितं कस्याश्चन नवीनायाः प्रेमिकायाः प्रेम-निदर्शनमेतत्। यां विरहज्वालामन्तर्दाहेन जानामि, तस्याः कारणमपि साम्प्रतमवगच्छामि। उपसंहारे फलमेतदेव ! सुष्ठु सुष्ठु !

**क्यासिओ।** वियानके ! किं प्रलपसि ! यस्माद् दुष्टाधमजनात् हीनसन्देहमिमं त्वं संगृहीतवती, तस्मा एव तं प्रत्यर्पय। इयं कस्याश्चन प्रेमिकायाः प्रेमनिदर्शनमिति मत्वा त्वमीर्ष्यान्वितासि। वियानके ! सत्यं ब्रवीमि, न तत् सत्यम्।

**वियानका।** तस्मात् कस्या एतत् ?

**क्यासिओ।** प्रिये ! नाहं तज्जाने। इयं मया गृहादेव संगृहीता। तथाऽस्याः चित्राङ्कनं मह्यं भृशं रोचते। ततोऽस्याः प्रत्यर्पण-निर्देशलाभात् पूर्वमेव—यस्य सम्भावनापि भूयस्येव—अहमेतदादर्शानुसारं चित्राङ्कनं मदर्थं वाञ्छामि। ततः एतद्विषयकं कार्यं निष्पादय। तदिदानीं स्थानादस्मात् त्वं याहि।

**वियानका।** तव पार्श्वाद् दूरं यास्यामि ? किन्तु कथम् ?

**क्यासिओ।** स्थानेऽस्मिन् सेनाध्यक्ष-महोदयस्य परिचर्यायां नियुक्तोऽस्मि। नारीसङ्गविहारिणं मामसौ पश्यतु नैषा ममेच्छा, नैतत् सङ्गतं वा।

**वियानका।** कथं तत् ?

**क्यासिओ।** कारणं नैतद् यत् त्वां नाहमाद्रिये।

**वियानका।** अपि "त्वं मां नाद्रियसे" इति वाक्यशेषः ? मया सह कियद्दूर-गमनाय त्वामनुरुणध्मि। पुनर्ब्रूहि अस्यां यामिन्यां तव साक्षात्-कारो मिलिष्यति न वा ?

**क्यासिओ।** त्वया सह केवलं कियद्दूरमेवाहं गमिष्यामि। यतोऽहमत्र कर्मलिप्तोऽस्मि। कामये त्वया सह शीघ्रमेव मम दर्शनं संघटताम् इति।

**वियानका।** तथा आस्ताम्। अवस्थानुयायि कर्म मयाऽवश्यमेव विधेयम्। (उभौ प्रस्थितौ)।

इति चतुर्थ-दृश्यम्

---

## पञ्चम-दृश्यम्

साइप्रास-दुर्ग-सम्मुखभागः।

(प्रविशतः ओथेलो इयागो च)

**इयागो।** अपि भवांस्तथा चिन्तयति ?

**ओथेलो।** तदपि प्रष्टव्यम् इयागो ?

**इयागो।** किम्, गोपन-चुम्बनम् ?

**ओथेलो।** अवैध-चुम्बनम्।

**इयागो।** तादृशी त्रुटिर्मार्जनीयैव। चिन्त्यतां प्रभो! यद्यहं मम स्त्रियै काञ्चन मुखमार्जनीं ददामि।

**ओथेलो।** तेन किम् ?

**इयागो।** ततस्तद् द्रव्यं तस्या एव जातम्। एवं सति सा तां कस्मैचन दातुमपि शक्नोति।

**ओथेलो।** किन्तु सा तस्याः सुनाम्नोऽपि अधिकारिणी। अपि सा सुनामापि त्यक्तुमर्हति ?

**इयागो।** प्रभो! सुनाम तु तादृशं वस्तु यन्न स्पर्शनीयं दर्शनीयं वा। वहुत्र दृश्यते येषां प्रकृतोऽधिकारो नास्ति, त एव तेनालंक्रियन्ते। किन्तु मुख-मार्जनी पुनः—।

**ओथेलो।** अये ईश्वर! तद्विस्मरणं नाम मम परम-सुखाय। इयागो, किन्तु स्मरामि किल ममैव मुखमार्जनी साम्प्रतं तस्य करे राजत इति।

**इयागो।** तथा भवतु, किन्तु तेन किम्!

**ओथेलो।** न तेन घ्यापारेण शुभं सूच्यते।

**इयागो।** भवतु, यदि अहं वदामि भवत्क्षतिकरं कर्म तेन कृतमिति? अथवा, मया श्रुतं किल साहंकारमेव उक्तं तेन "परप्रिया तेन उपभुक्ता" इति। ईदृशः स्वभावः केषाञ्चन वर्तते नाम।

**ओथेलो।** अपि तेन तादृशं किमप्युक्तम्?

**इयागो।** प्रभो! निश्चितं उक्तम्। किन्तु ध्रुवं जानीहि तेन तादृशं क्रिमपि नोक्तं यत् स सशपथम् अस्वीकर्तुं नार्हति।

**ओथेलो।** किन्तु किमुक्तं तेन?

**इयागो।** विश्वसिहि स उक्तवान्! किन्तु किमुक्तवानिति विशेषतो न जाने।

**ओथेलो।** किं स उक्तवान् मुखमार्जनीविषये? अपि स किमपि स्वीकृत-वान्? तत्स्वीकारोक्तिं वाञ्छामि, ततश्च कृतकर्मणे गलपाशव्यवस्था। प्राथम्येन गलपाशः, ततः स्वीकारोक्तिः! चिन्तनेनापि शरीरं कम्पते। प्रकृतिः कदापि रिपूत्तेजनाच्छादनेन न माम् आच्छादयितुं समर्थाऽभविष्यत् यदि तत्पश्चात् कोऽप्यशुभो निर्देशो नाभविष्यत्। नाकारणं मम देहकम्पो जातः। अहो लज्जा! नासिके! कर्णौ! अधर-युगलम्! एतदपि सम्भाव्यते? मुखमार्जनीविषये स्वीकारोक्तिः? अये जघन्य नरपिशाच!

(मूर्छितः पतति।)

**इयागो।** चलतु प्रतिक्रिया। अयि मम भैषज्य ! त्वं भव कार्यकारि। अतिविश्वासप्रवणा मानवा एवं जालवद्धा भवन्ति। वह्व्यः पुण्यवत्यः सती-शिरोमणयः अपि एवं विना कारणं कलङ्कभारं स्वशिरःसु धारयन्ति। प्रभो ! अपि श्रूयते भवता ? प्रभो ! प्रभो ! ओथेलो-महोदय ! अहं भवन्तमाह्वयामि।

( क्यासिओ प्रविशति )

क्यासियो-महोदय ! कीदृशोऽस्ति भवान् ?

**क्यासिओ।** को व्यापारः ?

**इयागो।** प्रभुर्मम मूर्छामापन्नः। द्वितीयमाक्रमणमेतत्तस्य, ह्योऽपि स आक्रान्त आसीत्।

**क्यासिओ।** शिरोदेशस्थ-शिरां घर्षय।

**इयागो।** न हि, तस्माद्विरम्यताम्। इयम् अज्ञानाच्छन्नता स्वाभाविक-पथे यातु। अन्यथा वदनात् फेनराशिर्निर्गमिष्यति। क्रमेण उद्दामोन्मत्तता आविर्भविष्यति। पश्यतु, असौ श्वसिति। स्वल्पकालाय भवान् दूरे यातु। साम्प्रतमसौ स्वस्थतामाप्स्यति। प्रस्थिते तस्मिन् अहं भवता सह कञ्चन गुरुत्वपूर्णविषयमवलम्ब्य आलोचनां करिष्ये। ( क्यासिओ प्रस्थितः। )

( ओथेलो शनैः शनैश्चक्षुरुन्मीलति। )

**इयागो।** सेनापते ! किं घटितम् ? अपि भवान् शिरसि आहतोऽस्ति ?

**ओथेलो।** अपि मामुपहससि ?

**इयागो।** अहमुपहसामि ! भगवन्नाम्ना शपामि, कदापि न। भवतो भाग्यभारं भवान् मानुष इव वहतु तदहं वाञ्छामि।

**ओथेलो।** व्यभिचारिण्या नार्याः स्वामी अहमेव दानवः पशुश्च।

**इयागो।** तथा सति जनवहुले नगरे वहवः पशवो यथा मिलिष्यन्ति, तथा भद्रवेशधारिणो दानवा अपि।

**ओथेलो।** अपि असौ स्वीचकार ?

**इयागो।** महाशय ! आत्मानं भवान् न हीनं मन्यताम्। तथा मन्यतां भवता यद् यूपवद्धः श्मश्रु विशिष्टः प्रत्येकं मानवः भवतो दुर्भाग्यस्य

सहचर एव। एवं लक्ष-लक्ष-मानवा जीवन्ति ये अवैध-निशाशय्यामधि-शयाना अपि घोषयन्ति ताः शय्या विशेषेण तेषामेव। तुलनया भवतोऽवस्था वरं साधीयसी। अहो नारकीया घृणा, अहो! दुःसहः परिहासः! निरापच्छय्याशयाना असतीनारी-वदन-चुम्बनपरा मानवाश्चिन्तयन्ति किल यत्तेषां भाग्यं सुप्रसन्नं सतीनारीलाभात्। न हि, वरं मया सर्वमेव प्राथम्येन परिज्ञेयम्। आत्मनोऽवस्थां प्राथम्येन परिज्ञाय तत एव व्यवस्था करणीया।

**ओथेलो।** त्वं विज्ञोऽसि इत्यत्र सन्देहो नास्ति।

**इयागो।** भवान् क्षणं दूरं तिष्ठतु। क्यासिओ भवतो मूर्च्छासमये समागच्छत्। पुनरागमनाय स मयाऽनुरुद्धः। आयाते तस्मिन् भवान् पुङ्खानु-पुङ्खं द्रक्ष्यति, वदनमण्डले तस्य कियान् घृणोपहासावज्ञाभावः संपोषितो वर्तते। स मया पृष्टः सन् स्वयं समुद्घोषयिष्यति कदा कस्मिन् स्थले केन उपायेन भवतः पत्न्या सह मिलितोऽभवत्, पुनरपि कदा मेलनं तयोर्घटिष्यते इति। तस्य भावभङ्ग्यादिकं भवान् लक्ष्यीकरोतु। मेरीनाम्ना शपथः क्रियताम्—धैर्यरक्षणे भवान् समर्थो भविष्यति इति। अन्यथा निश्चितं चिन्तयिष्यामि क्रोधसर्वस्वस्य भवतो मानुषवत् किमपि गौरववस्तु नास्ति।

(ओथेलो अन्तर्गच्छति)

**इयागो।** अहं क्यासिओ-महोदयं निश्चितं प्रक्ष्यामि वारवनिता-वियानका-विषयकं सर्वम्। क्यासिओ वियानका-नामश्रवणमात्रमेव निश्चितं हसिष्यति। क्यासिओ-हास्यध्वनि-श्रवणमात्रं ओथेलो उन्मत्तो भविष्यति। अहो तस्य अशिक्षिता हिंसा क्यासिओ-हास्य-हाव-भाव-लघुचापल्य-प्रभृतीनां निश्चितं कदर्थं करिष्यति। अये क्यासिओ इत एवायाति। (पुनः प्रविशति क्यासिओ)

**इयागो।** उपसेनाध्यक्ष-महोदय! भवान् कीदृश आस्ते।

**क्यासिओ।** अवस्था ममाधिक्येन गुरुतरा जाता। येन उपाधिना भवान् मां करोति भूषितं, तस्याभावेन मम प्राणा जाता अधीराः।

**इयागो।** डेस्डिमोना-साहाय्येन भवान् निश्चितं स्वपदं पुनरपि लप्स्यते। (निम्नस्वरेण) यदि विषयोऽयं वियानकाया आयत्तीभूतोऽभविष्यत् तदा त्वरितमेव भवता सिद्धिरलप्स्यत।

**क्यासिओ।** अये हतभागिनि! (स्मितं करोति)

**ओथेलो।** हन्त! इतो मध्ये एवैष हसति।

**इयागो।** काचन नारी पुरुषं प्रत्येतावदनुरक्ता भवितुमर्हतीति मम न परिज्ञातमासीत्।

**क्यासिओ।** हतभाग्या इयं दुष्टा नारी। अहमपि मन्ये सा मयि प्रेमासक्तेति।

**ओथेलो।** मन्ये स क्षीणस्वरेण अस्वीकुर्वन् व्यापारमिमं लघूकर्तु-मिच्छति।

**इयागो।** क्यासिओ-महोदय! शृणोतु भवान्।

**ओथेलो।** मन्ये तदुपाख्यान-पुनर्वर्णनाय असौ अनुरुणद्धि। तथा चलतु। उत्तमोऽयमनुरोधः, उत्तमः।

**इयागो।** असौ सर्वत्र प्रचारयति भवांस्तस्याः पाणिग्रहणं करिष्यतीति। अपि भवतोऽपि सैव इच्छा!

**क्यासिओ।** अहो हो! हो! (उच्चैर्हसति)।

**ओथेलो।** रोमानवद् विजयोल्लासं प्रकटयसि किल?

**क्यासिओ।** तामहं परिणेष्यामि? किमाह भवान्? कुलटामिमाम्? अनुरुणध्मि—मम बुद्धिं प्रति कियांश्चन सुविचारः करणीयः। न सा सत्यमेवं-विधोपेक्षाभाजनम्।

**ओथेलो।** अये उच्चहास्यम्? ये केचन विजयं लभन्ते ते उच्चैर्हसन्ति किल।

**इयागो।** विश्वसिहि, एष एव जनरवो—भवान् अस्याः पाणिग्रहणं करिष्यतीति।

**क्यासिओ।** अनुरुणध्मि भवन्तं सत्यभाषणाय।

**इयागो।** अन्यथाऽहं दुरात्मा एव।

**ओथेलो।** माम् अवञ्चयः किल! न्याय्यमाचरितम्।

**क्यासिओ।** इयं रटना तस्या वानर्या एव। सा स्वीय-प्रेमवलेना-हङ्कारवलेन च निश्चितवती यदहं तस्याः पाणिग्रहणं करिष्य इति, न मम प्रतिश्रुति-वलेन।

**ओथेलो।** अयम् इयागो किमपि मह्यं सङ्केतयति। मन्ये इदानीं विषयं तं प्रारभते।

**क्यासिओ।** सा कियत्कालात् पूर्वमेवात्रागच्छत्। सर्वत्रैव सा मामनुसरति। अन्येद्युः समुद्रतटे दण्डायमानोऽहं डेनमार्क-निवासिभिः सह भाषणरत आसम्। सा पुत्तलिका तत्रैव समागता। न केवलं तत् सा शालभञ्जी मम कण्ठलग्ना च जाता।

**ओथेलो।** मन्ये सा चीत्कारपूर्वकमुद्घोषयति—"भो प्रियतम क्यासिओ"। अस्य हावभावादिभिस्तथैव प्रकटीभवति किल।

**क्यासिओ।** ततो मम देहोपरि दोलनं वलनं सानुनासिक-वचनम् अथ मम हस्ताकर्षणञ्च। अहो हो हो!

**ओथेलो।** असौ निश्चितं वदति केनोपायेन उपभोगार्थम् एनं सा समाकृष्य नीतवतीति। अहं तव नासिकाग्रभागं पश्यामि किन्तु न कमपि कुक्कुरं तस्य भक्षणाय।

**क्यासिओ।** किन्तु तस्याः सङ्गं परित्यक्ष्यामि।

**इयागो।** मम पुरत एव पश्यतु भवान्—सा समायाति।

**क्यासिओ।** एका मेरुमार्जारीयम्। मेरीनाम्ना शपथः—किन्तु सुरभिता। (वियानका प्रविशति) कथं मत्पश्चात् एवं विचरसि?

**वियानका।** दुष्टग्रहस्तथा तस्य सहचरी तव पश्चाद् विचरतु। मुखमार्जनीयं मह्यं प्रदत्ता, कोऽस्य अभिप्रायः? अत्रत्यं कारुकार्यम् अन्यत्र मया समुद्धर्तव्यम्? कथम्? त्वं मुखमार्जनीमिमां तव गृहे प्राप्तवानसि, पुनर्न जानासि क इमां न्यक्षिपदिति? निश्चितं कस्याश्चन प्रेमिकायाः प्रेमनिदर्शनमेतत्। अहमस्याः शिल्पान्युद्धरिष्यामि किल? गृह्यताम्, यस्या मुखमार्जनीयं तस्यै दीयताम्। नाहमस्याश्चित्राङ्कनं करिष्ये।

**क्यासिओ।** सुन्दरि वियानके ! किमेतत् ? कोऽयं व्यवहारः ?

**ओथेलो।** अये ! मुखमार्जनीयं ममैव।

**वियानका।** यदि अद्य रात्रौ मया सह भोजनमिच्छसि, एहि। अन्यथा तवेच्छानुसारमेहि (वियानका वहिर्गता)।

**इयागो।** तस्याः पश्चाद्यातु भवान्।

**क्यासिओ।** निश्चितं तथा करणीयम्। अन्यथा सा पथि घट्टे वाटे सर्वत्र मां निन्दिष्यति।

**इयागो।** अपि नैशाहारो भवता तत्रैव करणीयः ?

**क्यासिओ।** तथैव इच्छामि।

**इयागो।** तथा सति, घटना-परम्परयाऽहमपि तत्र गमिष्यामि नु। यतो भवता सह आलपनं सुखायैव स्यात्।

**क्यासिओ।** अनुरोधोऽयं मे, भवान् गच्छतु निश्चितम्।

**इयागो।** तत आयातु भवान्। अन्यत् किमपि न वक्तव्यम्।

(क्यासिओ प्रस्थितः)

**अथेलो।** (पुरत आगत्य) इयागो ! ब्रूहि सा केनोपायेन मारयितव्या ?

**इयागो।** अपि क्यासिओ-महोदयस्य हास्यं त्वया परिदृष्टम् ?

**ओथेलो।** अहो दुरदृष्टम् !

**इयागो।** पुनः सैव मुखमार्जनी ?

**ओथेलो।** अपि सा सत्यं ममैव ?

**इयागो।** कठोरः शपथो मे ! निश्चितं सा तवैव। पुनः सा कुलटा-नार्यपि तेन भवत्पत्नीतो वहुमन्यते। भवतः पत्नी मुखमार्जनीं प्रदत्तवती तस्मै स पुनः तस्यै वेशविलासिन्यै दत्तवान् !

**ओथेलो।** इच्छामि किल नव वत्सरान् नरकयन्त्रणां सा लभतामिति। किन्तु अत्याश्चर्यं सौन्दर्यं लावण्यं माधुर्यं च तस्याः।

**इयागो।** तत् सर्वं भवान् विस्मरतु नाम।

**ओथेलो।** साऽद्यैव निपातमापद्यताम्। नहि नहि, न सा जीविष्यति। अहो! मम हृदयं साम्प्रतं प्रस्तरीभूतम्। स्वकरमाहत्य केवलमाघात एव पुनर्लभ्यते। अहो! पृथिवी नेतः पूर्वम् ईदृश-मधुरिममयीं नारीमलभत। सम्राजः पार्श्वे स्थित्वा तस्मा अनुज्ञां दातुं सा समर्थेति ध्रुवमेव।

**इयागो।** न हि, न सा भवतो रीतिः।

**ओथेलो।** लम्बय ताम् उद्बन्धन-रज्जौ। वस्तुतः सा कीदृशी, केवलं तदेव मयोच्यते। सूचीकर्मणि तस्याः निपुणता, अहो सङ्गीते तस्याः पारंगमता, सङ्गीतयोगेन सा भल्लुकमनसोऽपि हिंसां दूरीकर्तुं समर्था। अहो तस्या बुद्धेः प्राचुर्यं समुन्नतिश्च! कल्पनायाश्च—

**इयागो।** एतैः कारणैः सा समधिक-कुचरित्रा।

**ओथेलो।** अथ किम्, सहस्रशः। तदनन्तरं शान्तस्वभावस्तस्याः!

**इयागो।** अथ किं सातिशयं शान्ता सा।

**ओथेलो।** नहि नहि। तथापि इयागो चरमाक्षेपविषयोऽयं चरमाक्षेपविषयः।

**इयागो।** यदि तस्या अन्यायाचरणं भवते रोचते दीयतां तर्हि तस्यावाधोऽधिकारस्तस्यै, यदि तेन भवतः काऽपि न क्षतिः, नान्यस्य तेन क्षतिर्भवेत्।

**ओथेलो।** अहं तां खण्डशः कुट्टयिष्यामि, मां प्रति विश्वासघातकता?

**इयागो।** तादृश्या रमण्या जघन्यतमं कर्मेदम्।

**ओथेलो।** पुनर्ममैव केनचित् अधीनेन कर्मचारिणा सह।

**इयागो।** तत् पुनः समधिक-जघन्यतामावहति।

**ओथेलो।** इयागो! मदर्थं विषं किञ्चित् संगृहाण। अद्य रात्रावेव। तया सह न किमपि भवतु ममालोचनम्, मा नाम पश्चात् तस्या देहसौन्दर्यं मामाकुलीकरोतु दुर्वलीकरोतु। इहागो, अद्य यामिन्यामेव।

**इयागो।** विषप्रयोगेण न तत् करणीयम्। या शय्या तया कलुषीकृता, तस्यामेव शय्यायां श्वासरोधपूर्वकं तां मारय।

**ओथेलो।** उत्तमं तत्। सुष्ठुरयं प्रस्तावः! तेन स्यान्नग्राह्यो विचारः।

**इयागो।** पुनः क्यासिओ-व्यापारेऽहमेव स्वयं सर्वभारं ग्रहीष्ये। यामिन्यर्धभागे विषयेऽस्मिन् अन्यान् विषयान् बहून् श्रोष्यति भवान्।

**ओथेलो।** अत्युत्तमोऽयं प्रस्तावः।

(अन्तस्तूर्यध्वनिः) कथं तूर्यनिनादोऽयम्?

**इयागो।** निश्चितं भेनिस-नगर्या व्यापारः कश्चन। लोडोभिको डिउक्सकाशादत्र समायातः। पश्यतु भवतः पत्नीमपि तेन सहागताम्।

(प्रविशन्ति लोडोभिको, डेस्डिमोना अनुचराश्च)

**लोडोभिको।** सुयोग्य-सेनापते! भगवान् भवतो रक्षणकारणं भवतु।

**ओथेलो।** महाशय! हृष्टान्तःकरणेन शुभेच्छां गृह्णामि।

**लोडोभिको।** डिउक्महोदयस्तथा सेनेट-सदस्या भवन्तमभिनन्दनं विज्ञापयन्ति! (पत्रप्रदानम्)

**ओथेलो।** तेषां प्रीति-परिवहनकारिणे पत्राय मम चुम्बनम्।

(आवरणमुन्मोच्य पत्रं पठति)

**डेस्डिमोना।** लोडोभिको! कः संवादः?

**इयागो।** महाशय! भवतो दर्शनं मां विशेषेणानन्दयति। भवन्तं साइप्रासे सादराभ्यर्थनां विज्ञापयामि।

**लोडोभिको।** भवते धन्यवादः। उपसेनाध्यक्ष-क्यासिओ-महोदयः कीदृश आस्ते?

**इयागो।** असौ जीवति।

**डेस्डिमोना।** मम पत्युस्तस्य च मध्ये कश्चन दुर्भाग्य-जनको विच्छेद आत्मप्रकाशं कृतवान्। प्रार्थये, भवान् तं दूरीकरिष्यति।

**ओथेलो।** विषये तस्मिन् त्वं सुनिश्चिताऽसि?

**डेस्डिमोना।** प्रभो!

**ओथेलो।** (पठति) "कार्येऽस्मिन् न भवता विमतिः करणीया, यतो भवान्"—।

**लोडोभिको।** नासौ आहूतवान्। साम्प्रतम् असौ पत्रपाठनिरत आस्ते। सेनाध्यक्षोपसेनाध्यक्षयोर्मध्ये विवादः सृष्टः?

**डेस्डिमोना।** भृशमप्रीतिकरोऽयं विषयः। क्यासिओ-महोदय-महमाद्रिये इति हेतोर्यते तस्य निराकरणाय।

**ओथेलो।** नारकीया यन्त्रणेयम्।

**डेस्डिमोना।** प्रभो!

**ओथेलो।** अपि तव विवेचनावोध आस्ते?

**लोडोभिको।** पत्रपाठाद् विचलितोऽस्ति इति सम्भाव्यते। यतोऽहं मन्ये क्यासिओ-हस्ते शासनभारं समर्प्य गृहप्रत्यावर्तनाय असौ आदिष्ट इति।

**डेस्डिमोना।** विश्वसितु भवान्, तेन मम सन्तोष एव जातः।

**ओथेलो।** सत्यम्?

**डेस्डिमोना।** प्रभो!

**ओथेलो।** त्वामुन्मादग्रस्तां दृष्ट्वा परं परितुष्टोऽस्मि।

**डेस्डिमोना।** प्रियतम! ओथेलो, कथम्?

**ओथेलो।** (डेस्डिमोनामाहत्य) दुष्टाधमे!

**डेस्डिमोना।** नैतन्मे प्राप्यम्।

**लोडोभिको।** प्रभो! यदि अहं शपथपूर्वकमपि उद्घोषयामि यद्-व्यापारोऽयं मया प्रत्यक्षीकृत इति, तथापि भेनिसनगरे न कोऽपि तं विश्वसिष्यति। सहनसीमानमतिक्रामत्येतत्। प्रतिविधानं करोतु भवान्। सा क्रन्दति।

**ओथेलो।** नष्टभ्रष्टे! दुष्टाधमे! यदि नारीणामश्रुजलम् उत्पादन-क्षममभविष्यत्, अस्या नेत्रगलित-प्रत्येकाश्रुकणातः कुम्भीर एकैकोऽजनिष्यत। मम सम्मुखतो दूरं याहि।

**डेस्डिमोना।** तव मनःपीड़ोत्पादनाय नाहमत्र स्थास्यामि।

(गमनोद्यता)

**लोडोभिको।** वस्तुगत्या सा भृशं वशंवदा। प्रभो कातरोऽयमनुरोधः— प्रत्यावर्तनाय तां भवानादिशतु।

**ओथेलो।** महाशये!

**डेस्‌डिमोना।** नाथ!

**ओथेलो।** अनया भवतः किं प्रयोजनम्?

**लोडोभिको।** प्रभो! कस्य? मम?

**ओथेलो।** अस्या अत्रावस्थानायानुरोधं भवानेव कृतवान्। अये! मायाक्रन्दन-निपुणा खल्वियम्। गृहप्रत्यावर्तनायादेशो मया लब्धः। त्वं तु दूरं याहि। सत्वरमेव त्वामाह्वयिष्यामि। महाशय! आदेशो मया शिरोधार्यः क्रियते। भेनिस्‌नगरीं प्रत्यावर्तिष्येऽहम्। त्वं स्थानादस्माद्‌दूरमपेहि। ( डेस्‌डिमोना प्रस्थिता ) क्यासिओ एव मम स्थलाभिषिक्तो भविष्यति।

( सेनाध्यक्ष-महोदयः प्रस्थितः )

**लोडोभिको।** अप्येष स "मुर"-महोदयः यं समग्र-शासनसभा स्वयं-सम्पूर्णं मन्यते?

**इयागो।** स भृशं परिवर्तितः खलु।

**लोडोभिको।** अपि तस्य बुद्धिरपि लोपं याता? अपि मस्तिष्कमस्य विकृतिं प्राप्तं वा?

**इयागो।** यथाऽसौ वर्तते तथाऽसौ। कीदृशो भविष्यति, नाहं तद्वक्तुं शक्नोमि।

**लोडोभिको।** अहो! स्वस्त्रियाः प्रहारः?

**इयागो।** नैतन्न्याय्यमाचरितम्। किन्तु यद्ययमेव प्रहारश्चरमोऽभविष्यत्, आनन्दितोऽभविष्यम्।

**लोडोभिको।** अपि स्वभावोऽस्य एतादृश एव? अथवा पत्रमिदं तस्योत्तेजनां विधाय तमकार्येऽस्मिन् नवीने प्रवर्तयामास?

**इयागो।** अहो यद्यन्मया परिदृष्टं तद्विषये किमपि वक्तुं नाहम्

इच्छामि, तेन मम साधुत्व-परिचयाभावो भविष्यति। केवलं भवान् एनं लक्ष्यी-करोतु।

**लोडोभिको।** अयमेव मनस्तापविषयो यदनेनाहं प्रतारितोऽस्मि।

इति पञ्चम-दृश्यम्

—:०:—

## षष्ठ-दृश्यम्

( प्रविशतः ओथेलो एमेलिया च )

**ओथेलो।** न सन्देहजनकं किञ्चित् त्वया परिदृष्टम् ?

**एमेलिया।** न किञ्चित्तथा मया श्रुतमपि, येन मम सन्देहो वर्धेत।

**ओथेलो।** त्वं क्यासिओ-डेस्डिमोने एकस्थाने दृष्टवती।

**एमेलिया।** किन्तु किमप्यन्यायाचरणं न मया परिदृष्टम्। तयोः परस्परालोचनायाः प्रत्येक-शब्दो मया श्रुतः।

**ओथेलो।** कदाचन निम्नकण्ठस्वरेणापि न कृतं भाषणम् ?

**एमेलिया।** प्रभो ! कदाचन न।

**ओथेलो।** त्वां कदाचन स्थानान्तरमपि न प्रेषितवती सा।

**एमेलिया।** कदापि न।

**ओथेलो।** आश्चर्योऽयं विषयः।

**एमेलिया।** प्रभो ! सर्वस्व-पणेनापि वक्तुं समर्थाऽस्म्यहं, सा साध्वी। मम जीवनमपि पणविषयो भवेत्। यदि भवान् अन्यथा मनसि कृतवान् तादृशीं चिन्तां दूरीकरोतु। तेन तव हृदयं केवलं प्रतारितं भविष्यति। यदि कश्चन दुरात्मा भवति तादृशीं धारणां जनितवान्, भगवान् तं दुष्ट-पिशाचाभिशापेन करोतु जर्जरितम्। यतः, यदि सा सती साध्वी सत्यवती न भवति, तदा सुखी मानवोऽपि नास्ति। निष्कलङ्कतमा पत्नी अपि तदा कुत्सायोग्या।

**ओथेलो।** तामत्र प्रेषय। गच्छ।

( एमेलिया प्रस्थिता )

इयमित्थं कथितवती, किन्तु सा केवलं कुट्टनी-प्राया।

( प्रविशति एमेलिया डेस्डिमोना च )

**डेस्डिमोना।** प्रभो ! कोऽभिप्रायः ?

**ओथेलो।** प्रिये ! अनुरोधेन ममात्रागच्छ।

**डेस्डिमोना।** प्रभो ! कस्तवाभिप्रायः ?

**ओथेलो।** तव चक्षुर्द्वयं मयाऽवश्यमेव द्रष्टव्यम्। मां प्रत्यवलोकय।

**डेस्डिमोना।** कीदृशीयमुद्भटा मतिः।

**ओथेलो।** ( एमेलियां प्रति ) महाशये ! तव कृत्यानि कुरु। प्रेमिक-प्रेमिके यथा रहसि तिष्ठेतां तथा विधेहि, द्वारञ्च कुरु बद्धम्। ( एमेलिया प्रस्थिता )

**डेस्डिमोना।** नतजानुरहं प्रार्थये, तव वाक्यतात्पर्यं स्पष्टतया ब्रूहि। तव क्रोधः सुप्रकटः, न तु वाक्यार्थः।

**ओथेलो।** ब्रूहि त्वं कीदृशी ?

**डेस्डिमोना।** केवलं तवानुगता एकनिष्ठा स्त्री।

**ओथेलो।** शपथपूर्वकं तद् भाषस्व, ततो गच्छ नरकम्। नरकराजोऽपि त्वां दर्शनेन स्वर्गवासिनीति मन्यते, तस्मात् स्पर्शनाद् भयमवाप्स्यति। ततः ( प्राथम्येन व्यभिचारः ततश्च मिथ्याभाषणम् ) एतत्कारणद्वयहेतोः त्वं वारद्वयं नरकं याहि। शपथपूर्वकं ब्रूहि त्वं साध्वीति।

**डेस्डिमोना।** भगवान् जानात्यहं तथेति।

**ओथेलो।** भगवान् सत्यं जानाति यत् त्वं नरकवदविश्वासभाजनमिति ?

**डेसडिमोना।** प्रभो ! कं प्रति ? कस्य सङ्गदोषात् ? कथमहम् अविश्वासभाजनम् ?

**ओथेलो।** डेस्डिमोने, दूरं याहि। दूरं याहि। याहि दूरम्।

**डेस्डिमोना।** अये अशुभो मे दिवसः। कथं क्रन्दसि ? प्रभो ! किमहमेव तवाश्रुनिषेकस्य कारणम् ? आशासे मम स्वामी मां साध्वीं चिन्तयति।

**ओथेलो।** अथ किम्। हत्याशालाया ग्रीष्मकालीन-मक्षिकाश्रेणीमिव, द्रुतवंशविस्तारो यस्या नित्यकर्म। अये! त्वमेका जघन्या वन्यजा, किन्तु तव मधुरं रूपं नयनलोभनं गन्धश्चापि मधुरः—यतश्चैतन्यं जायते क्लेशान्वितम् ततो मन्ये तव जन्माभाव एव आसीद्वरम्।

**डेस्डिमोना।** अहो! अज्ञातः को न्वपराधो मया कृतः।

**ओथेलो।** अपि परिच्छन्न-कागजखण्डस्य सुदर्शन-पुस्तकस्य सृष्टिरासीत् तदुपरि "गणिका"—शब्दमुद्रणार्थम्? किं त्वमकरोः? अये साधारणोपभोग्ये वारवनिते! यदि करोमि तव कृतकर्मवर्णनं, मम वदनं स्यात् अग्निकुण्डं—यत्र शालीनता दग्धीभूता भस्मसाद् भविष्यति। किं त्वमकरोः? तद्धेतोः स्वर्गः करिष्यति नासिकाकुञ्चनं चन्द्रस्य भविष्यति पद्मनिमीलनम्। यो वन्धनहीनः पवनः सम्मुखगतान् सर्वान् परिचुम्व्य भ्रमति, सोऽपि मृत्तिकातलदेशस्थ-गुहाभ्यन्तरे आश्रयान्वेषणरतो भवति—त्वदसच्चरित्र-वार्त्ता-श्रवणभयात्। किं त्वमकरोः? निर्लज्जे वेशविलासिनि!

**डेस्डिमोना।** भगवान् जानाति, त्वं मां प्रति करोष्यविचारम्।

**ओथेलो।** अपि न त्वं वाराङ्गनाऽसि?

**डेस्डिमोना।** यदि खृष्टधर्मावलम्बिन्यहं, निश्चितं कदापि न। प्रभोः कृते जघन्याशुचिस्पर्शात् देहस्यास्य संरक्षणं यदि न वाराङ्गनाकार्यं, तदाऽहमपि न वाराङ्गना।

**ओथेलो।** किम्? न त्वं भ्रष्टा वाराङ्गना?

**डेस्डिमोना।** नहि, यतोऽहं परित्राणमवश्यमेव लप्स्ये।

**ओथेलो।** अपि तत् सम्भवति?

**डेस्डिमोना।** आवयोः क्षमां विदधातु भगवान्।

**ओथेलो।** ततोऽहं क्षमां प्रार्थये। भेनिस्नगर्या यया चतुरया गणिकया सह मम विवाहवन्धनं समघटत, सैव त्वमिति अहमचिन्तयम्। (उच्चैः) अये महाशये! साधुः पिटारः यस्मिन् द्वारि द्वाररक्षकरूपेण वर्तते, तस्य द्वारस्य विपरीतदिशि दण्डायमाना त्वं नरकद्वारं रक्ष। (पुनः प्रविशति एमेलिया)

त्वम्! त्वम्! त्वम्! अस्माकं कर्म सुसम्पादितम्। तव कष्टभोगाय मुद्रा गृहाण। त्वामनुरुणध्मि द्वारं तालकबद्धं कुरु, तथाऽस्माकं विषयमिमं न प्रकाशय।

(ओथेलो प्रस्थितः)

**एमेलिया।** अहो! अस्य भद्रमहोदयस्य मस्तिष्कं सुस्थिरमास्ते किम्? भद्रे! का वार्ता? भद्रे! भवती कीदृश्यास्ते?

**डेस्डिमोना।** तन्द्राग्रस्ताऽस्मि।

**एमेलिया।** महाशये! प्रभोरवस्था कीदृशी?

**डेस्डिमोना।** कस्य?

**एमेलिया।** कथम्? मम प्रभोः।

**डेस्डिमोना।** कस्तव प्रभुः?

**एमेलिया।** भद्रे! आवयोः प्रभुरेक एव।

**डेस्डिमोना।** नास्ते मम प्रभुः कश्चन। एमेलिये! न मया सह वचःप्रवृत्ता भव। नाहं क्रन्दितुमपि समर्था; अथच चक्षुर्जलं विना न मेऽन्यदास्ते उत्तरम्। त्वामनुरुणध्मि मम शय्यायामद्य विवाह-यामिन्यास्तद् वस्त्रखण्डं संप्रसारय।

इति षष्ठ-दृश्यम्

—:०:—

## सप्तम-दृश्यम्

(ओथेलो, लोडोभिको, डेस्डिमोना, एमेलिया, अनुचराश्च प्रविशन्ति)

**लोडोभिको।** महाशय! अनुरुणध्मि भवान् मया सह नागच्छतु।

**ओथेलो।** तद् भवतु, भ्रमणं मम उपकारायैव।

**लोडोभिको।** महाशये! विदायः। भद्रे! भवत्यै विनीतो धन्यवादो मे।

**डेस्डिमोना।** मान्यवर! भवते सादरमभ्यर्थनं विज्ञापयामि।

**ओथेलो।** महाशय! किं भवता पादचारेण गन्तव्यम्? अये डेस्डिमोने!

**डेस्डिमोना।** प्रभो ?

**ओथेलो।** अधुनैव त्वं शय्याश्रयं कुरु। शीघ्रमेव अहं प्रत्यावर्तिष्ये। तत्रत्यां परिचारिकां तु दूरेऽपसारय। निश्चितं तद्विषयेऽन्यथा न कार्यम्।

**डेस्डिमोना।** प्रभो! तत् निश्चितं करिष्ये।

(प्रस्थिता ओथेलो लोडोमिको परिचारकाश्च)

**एमेलिया।** साम्प्रतं कीदृशः? साम्प्रतम् असौ शान्ततर इव लक्ष्यते।

**डेस्डिमोना।** तत्रभवान् उक्तवान् अधुनैव असौ पुनरागमिष्यतीति। आदिष्टाऽस्मि शय्यागमनाय, तव च विदायकरणाय।

**एमेलिया।** मम विदायः!

**डेस्डिमोना।** स एव तस्यादेशः। ततो भद्रे एमेलिये! मम रात्रिवस्त्रमानीय त्वं गच्छ। नासौ साम्प्रतं मया रोषणीयः।

**एमेलिया।** मन्ये भवत्या सार्धं तस्यादर्शनमेव सर्वथा भवत्याः शुभाय भवेत्।

**डेस्डिमोना।** नाहं तन्मन्ये। असौ मम तादृशः प्रियः, यत् तस्य कठोरता, भर्त्सना, भ्रूकुटिश्च—दयया मम वसनबन्धनं श्लथं कुरु—एतासु ओतप्रोत आस्ते सौन्दर्य-ममत्व-परिचयः।

**एमेलिया।** भवत्या निर्देशमनुसृत्य मया शय्यास्तरणं तद्विस्तारितम्।

**डेस्डिमोना।** सर्वं समम्। सत्यं कथयामि मनोऽस्माकं निर्बोधमेव। यदि त्वन्मृत्योः प्रागेव मम मृत्युर्घटेत, सानुग्रहं तेन शय्यास्तरणेन मां प्रच्छादय।

**एमेलिया।** अहो कष्टम्। भवती कथममङ्गलं चिन्तयति।

**डेस्डिमोना।** मम मातुर्बारवारानाम्नी काचन परिचारिकाऽसीत्। तस्याः प्रेमभाजनमासीत्तथाविधः कश्चन जनो य उन्मत्तः सन् तां परितत्याज। तस्या "उइलो"-सङ्गीतमेकमासीत्। सङ्गीतं प्राचीनं किन्तु तन्माध्यमेन तस्या भाग्यं प्रकाशमलभत। तत् सङ्गीतं गायन्ती सा ममार। अद्य रात्रौ तत् सङ्गीतमेव मम संबलं भविष्यति। साम्प्रतं शय्यापार्श्वे मुखं प्रत्यावर्त्य

हतभाग्य-वारवारावत् सङ्गीताश्रयणं विना न मे कार्यान्तरं विद्यते। ततस्तुभ्यं गमनाय ममानुरोधः।

**एमेलिया।** अपि भवत्या रात्रिपरिधेयम् आनेतव्यम् ?

**डेस्‌डिमोना।** न हि। केवलं वस्त्रं मम श्लथं कुरु।

(गायति)

उदुम्बर-तलासीना वाला दीना हीना,
गायति हरिद् "उइलो" गानम्।
वक्षोदत्तकरा जानु-न्यस्तचूड़ा
उइलो उइलो उइलो गानम्।
नवीनाः स्रोतोधारा- स्तस्याः पार्श्वचराः
कुर्वन्ति शोकार्त-गुञ्जनम्
उइलो उइलो उइलो गानम्।
लवण-नयनासाराः प्रस्तर-द्रवणकराः
शय्यावस्त्राणि विस्तारय—उइलो उइलो उइलो गानम्।

प्रार्थये त्वं कुरु त्वराम्। प्रभुर्ममाचिरादेवायास्यति किल।

(पुनर्गायति)

श्यामल-"उइलो" माल्यं कुरु गले दोदुल्यमानं
मा कुरु तस्य निन्दनम्, आद्रिये तस्य कुत्सनम्—
न हि, नेयम् अव्यवहित-परवर्तिनी पंक्तिर्गानस्यास्य।
शृणु! कोऽपि करोति द्वारे कराघातम्।

**एमेलिया।** केवलः पवनस्तत्र।

**डेस्‌डिमोना।** (गायति)

तव प्रेम ह्यसारं मामाशु भाषणपरां
उइलो-उइलो-उइलो गानम्।
मयि वहुनारीसङ्गिनि भव त्वं वहुनररङ्गिणी।

ततस्त्वं स्थलादस्माद् गच्छ। शुभरात्रिः। चक्षुर्ज्वालाऽनुभूयते मया। किं तेन क्रन्दनं सूच्यते ?

**इयागो।** यदहं चिन्तितवान् तदकथयम्। पुनः, नान्यत् तादृशं किमपि उक्तवान् यत्तस्मै सत्यं न प्रतिभाति स्म।

**एमेलिया।** किन्तु सा अविश्वासयोग्या चरित्रविषये एवं किमपि त्वया उक्तम्?

**इयागो।** वाढ़म्।

**एमेलिया।** मिथ्या त्वं भाषितवान्। न्यक्कारजनकं जघन्यं मिथ्या, ममात्मना शपथः, मिथ्या तत् जघन्यतमं मिथ्या। सा क्यासिओ-सम्पर्केण व्यभिचारिणी इत्यपि त्वया उक्तम्?

**इयागो।** अथ किम्। वहिर्गच्छ, तव रसनां संयतां कुरु।

**एमेलिया।** नाहं तत् करिष्ये, नाहं जिह्वासंयमनं करिष्ये। सेयं मम प्रभुपत्नी साम्प्रतं शय्यायां मृता शेते।

**सर्वे।** नहि नहि, न तथा भवतु।

**एमेलिया।** तव मिथ्याभाषणमेव तत्र कारणम्। एतत् हत्याकाण्डं तेनैव प्ररोचितम्।

**ओथेलो।** महोदयाः सर्वे! न तथा भवद्भिरवलोक्यताम्। एतत्तु सत्यम्।

**ग्रासियानो।** किन्तु तदद्भुतम्।

**मन्ट्यानो।** पैशाचिकं कर्म तत्।

**एमेलिया।** जघन्यतमं कर्म, जघन्यतमं कर्म। अहं बुध्ये सन्धानं मिलितम्। मया तदैव चिन्तितम्। दुःखेनाहमात्महत्यां करिष्ये। अहो! जघन्यतमं कर्म।

**इयागो।** अपि त्वमुन्मत्ताऽसि? आदिशामि गृहं गच्छ।

**एमेलिया।** भद्रमहोदयाः मह्यं भाषणानुमतिर्देया। अस्य वचनपालनं मम कर्तव्यं, किन्तु न साम्प्रतम्। इयागो! नाहं कदापि गृहं प्रत्यावर्तिष्ये।

**ओथेलो।** अहो हो अहो! (शय्यायां पतति)

**एमेलिया।** शयानस्त्वं कातरं विलप। यतस्त्वं तामेव निहतवान् यादृशी निरपराधा मिष्टभावा नारी जगति न कदापि जन्म परिगृहीतवती।

**ओथेलो।** (उत्थाय) न हि, साऽसीत् घृणार्हा। पितृव्य! भवन्तं नाहं परिज्ञातवान्। भवतो भ्रातुष्पुत्री तत्रास्ते शय्यालीना। सत्यम् अयं करस्तस्याः श्वासरोधं कृतवान्! कर्मेदं भयानकं वीभत्सञ्च, तदहं जाने।

**ग्र्यासियानो।** हतभाग्ये डेस्‌डिमोने! तव पिता साम्प्रतं मृत इत्यहमानन्दं भजे। तव विवाह एव तत्र कारणम्। त्वद्दत्त-दुःखहेतोः सोऽम्रियत। यदि सोऽजीविष्यत्, दृश्यमिदं तस्य सातिशयितं मर्मपीड़कम् अभविष्यत्। तस्य देवोचित-सुबुद्धिं साभिशापं समुत्सार्य स जीवनमयापयिष्यत्।

**ओथेलो।** अहो करुणमिदम्! तथापि इहागो जानाति, सा क्यासिओ-प्रेमान्विता तेन सह तदसाधु कार्यं सहस्रशः कृतवती। क्यासिओ-स्वीकृतं सत्यमेतत्। पुनः यं प्रणयोपहारं तस्यै प्राथम्येनाहमदां, सा क्यासिओं प्रति प्रणयासक्त्या पुरस्काररूपेण तस्मै तं दत्तवती। क्यासिओ-हस्ते स मया दृष्टः। अहो! सैषा मुखमार्जनी, यां मम पिता मम जनन्यै अदात्।

**एमेलिया।** अये भगवन्! अये स्वर्गीय विभूतयः!

**इयागो।** अये विरम, शान्तिभङ्गं मा कुरु।

**एमेलिया।** सत्यं निश्चितं प्रकाशमेष्यति। कथमहं नीरवा भविष्यामि? निश्चितं वदिष्याम्यहम्। वाधाहीन-समीरणवत् निश्चितं मुक्तकण्ठेनाहमुद्घोषयिष्यामि। देवता मानुषाः पिशाचाः सर्वेषां वा भविष्याम्यविश्वास-भाजनम्। तथाप्यहं घोषणामवश्यं करिष्ये।

**इयागो।** सुबुद्धिमाश्रित्य गृहं गच्छ।

**एमेलिया।** नाहं तथा करिष्ये।

(इयागो एमेलियां छुरिकाविद्धां कर्तुं समुद्यतः।)

**ग्र्यासियानो।** धिक्! स्त्रियमसिना आक्रामसि।

**एमेलिया।** अये हीनबुद्धे मूढ़! यां मुखमार्जनीमधिकृत्य त्वं वदसि, सा मयैव समाहृताऽसीत्। तामहं स्वामिने मम दत्तवती। यतः प्रायेणासौ

समधिकतम-व्यग्रतया मयि तदर्थमनुरोधं कृतवान्—या व्यग्रता तद्विध-द्रव्याय न युज्यते।

**इयागो।** अयि दुष्टे कुलटे भ्रष्टे !

**एमेलिया।** सा क्यासिओ-महोदयाय तां ददौ ? नहि, अहमेव तां मम स्वामिने दत्तवती।

**इयागो।** अयि दुरन्त-नरकाकृते ! मृषा त्वं भाषसे।

**एमेलिया।** भद्रमहोदयाः। नाहं तथा करोमि। नाहं तथा करोमि। नाहं तथा करोमि। हत्याकारिन् महामूर्ख ! तादृश्या महासत्या तव किं प्रयोजनम् !

**ओथेलो।** वज्रनिर्माणातिरिक्तः प्रस्तरः कोऽपि किं स्वर्गेऽवशिष्टो नास्ति। अये नराधम दुरात्मन् !

( इयागों प्रति धावति। इयागो एमेलियां छुरिकाविद्धां कृत्वा वहिर्गतः।)

**ग्र्रासियानो।** महिलेयं भूतले पतिता। अहो इयं नारी तेन मारिता।

**एमेलिया।** यूयं सर्वे मां मत्प्रभुपत्नीपार्श्वे एव कुरुत शायिताम्।

**ग्र्रासियानो।** स पलायितः। किन्तु तस्य पत्नी निहता।

**मन्ट्यानो।** असौ नराधम-शिरोमणिः। "मुर"सकाशात् अस्त्रं मया संगृहीतम्। तद् भवान् नयतु। वहिर्देशाद् द्वारमिदं रक्षतु भवान्। तस्य हत्या वरं विधेया, तथापि न स वहिर्गच्छतु। तस्य दुरात्मनः पश्चाद्धावनमहं कुर्वे। स साम्प्रतं दण्डार्हः क्रीतदास एव। ( मन्ट्यानो तथा ग्रासियानो प्रस्थितौ )

**ओथेलो।** नावशिष्यते वीरत्वं मम किञ्चन। तुच्छो जनोऽपि मत्करात् असिं ग्रहीतुं समर्थः। किन्तु साधुतायां गतायां कथं सम्मानो जीवनधारणं कुर्यात् ? सर्वं यातु नाम।

**एमेलिया।** भद्रे ! तव सङ्गीते आसीत् का नाम सूचना। शृणु, अपि त्वं मम वाणीं न शृणोषि ? हंसीभूमिकाभिनयपूर्वकं सङ्गीतसुखेन मृत्युवरणं करिष्ये।

( गायति—उइलो, उइलो, उइलो )।

अये मूढ़ मुर ! सा सतीशिरोमणिः आसीत्। निष्ठुर-मुर ! सा त्वत्-प्रेमजीविताऽसीत्। यतोऽहं सत्यं ब्रवीमि ततो ममात्मा शान्तिमेष्यति। एतत् सत्यं संप्रकटय्य सुखमहं मृत्युवरणं करोमि। ( मृत्युः )

**ओथेलो।** मम गृहेऽस्मिन्नास्ते अन्यदस्त्रम्। स्पेन-देशे निर्मितं तत् तुषारशीतल-नदीजलेन कठिनीकृतम्। एतदेव तत्।

पितृव्य ! निश्चितमेवाहं वहिर्गमिष्यामि।

**ग्र्यासियानो।** ( नेपथ्यात् ) तादृश-प्रयत्न-करणहेतोः कठोरशास्तिस्तुभ्यं विधास्यते। निरस्त्रेण त्वया कष्टभोगोऽवश्यमेव स्वीकरणीयः।

**ओथेलो।** ततः अन्तरागत्य भवान् मया सह वार्तालापं करोतु। अन्यथा निरस्त्रोऽप्यहम् आक्रमणं करिष्ये।

( पुनः प्रविशति ग्र्यासियानो )

**ग्र्यासियानो।** को व्यापारः ?

**ओथेलो।** पश्यतु, मत्सकाशे विद्यते कश्चनासिः। इत उत्तमतमोऽसिः कदाचन कस्यापि सैनिकस्योरुदेशं नाशोभयत। अस्य साहाय्यकेनाहं भवद्दत्त-बाधातो विंशति-गुणाभ्यधिकां प्रतिरोध-बाधामुत्तीर्णवान्। किन्तु व्यर्थोऽय-महङ्कारः। को भाग्यं नियन्त्रयेत्, साम्प्रतं मम तादृश्यवस्था नास्ति। किन्तु मां सशस्त्रं दृष्ट्वा भवान्न मा विभेतु। अयमेव शेषो मम जीवनयात्रायाः, अहमेव मम लक्ष्यं, मम समुद्र-यात्रायामियमेव चरम-विरतिः। अपि भीतो भवान् पश्चाद् धावति ? तादृशं भयमनावश्यकम्। यदि कोऽपि तृणखण्डमपि हस्ते गृहीत्वा ओथेलोमाक्रामेत्, ओथेलो तत्क्षणात् अपसरिष्यति। किन्तु ओथेलो कुत्र गच्छेत् ? साम्प्रतं कथमिव त्वं दृश्यसे ? अये भाग्यहते नारि ! तव वस्त्रवत् त्वं शुभ्रा। विचारदिवसे यदा आवयोर्दर्शनं भविष्यति, तदा तवेयं दृष्टिर्मां स्वर्गाद्दूरं निक्षेप्स्यति, पिशाचास्तदा मां नरकं नेष्यन्ति। त्वं शीतला, हिमशीतला त्वं तव सतीत्वम् इव। अभिशप्तं क्रीतदासमेनम् अये दानवाः ! कशाघातजर्जरितं कुरुत,। शून्ये मामुत्क्षिपत, गन्धकेन मां कुरुत

दग्धम्। तरलाग्नेरुत्तालोपसागरे मां कुरुत निमज्जितम्। अहो डेस्डिमोने ! डेस्डिमोने ! न त्वं वर्त्तसे ? अहो हो हो !

( प्रविशन्ति लोडोभिको, मन्टग्रानो, आसनवाहितः क्यासिओ, वन्दी इयागो कर्मचारिणश्च )।

**लोडोभिको।** कुत्रासौ हठकारी हतभाग्यो मानवः ?

**ओथेलो।** एष स एव य आसीदोथेलो।

**लोडोभिको।** कुत्र स विषाक्तः सर्पः ? तमत्रानय।

**ओथेलो।** अहं तस्य पादं प्रत्यवलोकयामि। किन्तु सा काचन उपकथाऽसीत्। यदि त्वं पिशाचाधमः स्याः, न त्वं हत्याभाजनम्।

( इयागो आहतः )

**लोडोभिको।** अस्य सकाशात् तरवारिर्बलेन ग्राह्या।

**इयागो।** महाशय ! रक्तं क्षरति सत्यं किन्तु नाहं निहतोऽस्मि।

**ओथेलो।** नाहं ततो दुःखितः। त्वं जीवसि इति ममेच्छा। मद्विवेचनया मृत्युरेव सुखम्।

**लोडोभिको।** अये ओथेलो महोदय ! भवान् एकदा महान् आसीत्। अद्य तु जघन्यस्य कस्यचन क्रीत-दासस्य हीनकुमन्त्रणा-जाले आबद्धोऽस्ति। किं वा भवन्तं वच्मि ?

**ओथेलो।** कथम् ? यथेच्छं भवान् वदतु। यदि भवतोऽभिरुचिः, वदतु भवान्—अहं सम्मानितो हत्याकारीति। यतः किमपि न द्वेषात्, परन्तु सर्वं मया सम्मानायानुष्ठितम्।

**लोडोभिको।** एष दुरात्मा तस्य दुष्कार्यम् अंशतः केवलं स्वीकृतवान्। अपि भवान् एष च उभौ क्यासिओ-हत्याविषये एकमतौ ?

**ओथेलो।** अथ किम् ?

**क्यासिओ।** प्रिय सेनापते ! न भवते कदाचन तादृशं किमपि कारणमहं प्रदर्शितवान्।

**ओथेलो।** तदहं विश्वसिमि। तव क्षमां च प्रार्थये। त्वत्सकाशे

पुनरयं ममानुरोधः—अयं दानवाधमस्त्वया प्रष्टव्यः किल, कथमसौ मां काये मनसि च तथा जालवद्धं कृतवान् ?

**इयागो।** मत्सकाशे किमपि न ज्ञातुमिच्छतु भवान्। अतः पश्चान्नाहं किमपि वक्ष्ये।

**लोडोभिको।** प्रार्थनाज्ञापनायापि न ?

**ग्र्यासियानो।** निर्यातन-यन्त्रणया तव वाक् स्फूर्तिर्भविष्यत्येव।

**ओथेलो।** तव मौनं वलम्।

**लोडोभिको।** यद् यत् संघटितं तद्भवता ज्ञातव्यमेव। मन्ये तत् सर्वं भवता न ज्ञातम्। निहत-रडारिगो-वस्त्रपुटे प्राप्तमेतत् पत्रद्वयम्। तत्र एकस्मिन् निर्देश आस्ते क्यासिओ-हत्याभारं रडारिगो परिगृह्णातु इति।

**ओथेलो।** अये कीदृशो दुरात्मा एषः ?

**क्यासिओ।** वर्वरतमः, जघन्यतमः।

**लोडोभिको।** अन्यत् पुनरसन्तोषज्ञापकं पत्रम्। तदपि तस्य वस्त्र-पुटादेव संगृहीतम्। मन्ये तत् पत्रं जघन्यतमायास्मै दातव्यमासीत्। किन्तु सम्भाव्यते इतो मध्ये इयागो तं संदिग्धवान्।

**ओथेलो।** अहो अनिष्टसाधको दुरात्मा ! क्यासिओ ! केनोपायेन तां सुखमार्जनीं त्वं प्राप्तवान् ? सा मम पत्न्या एवासीत्।

**क्यासिओ।** मया सा सुखमार्जनी मम गृह एव प्राप्ता। एषोऽधुनैव स्वीकृतवान् यत् स तां सुखमार्जनीं मम गृहे विशेषोद्देश्येन संस्थापितवान्। तस्याभिप्रायश्च संसाधितः।

**ओथेलो।** अये ! मूर्ख ! मूर्ख ! मूर्ख !

**क्यासिओ।** पुनः, पत्रे एतदपि लिखितं यत् प्रहरिकार्यकाले मां प्रति औद्धत्य-प्रदर्शनाय रडारिगो इयागों भर्त्सयामास। तत्फलेनैवाहं पदच्युतोऽभवम्। यद्यपि साम्प्रतं चिरायैव मृतवत् शायितः, तथापि स वदति किल इयागो तमाहतवान्। इयागो तं दुरभिसन्धिलिप्तं कृतवान्।

**लोडोभिको।** भवता गृहमिदं परित्यज्य निश्चितमस्माभिः सार्धं

गन्तव्यम्। भवतः क्षमता सैन्यपरिचालनभारश्च प्रत्याहृतः। क्यासिओ साइप्रास-शासनकर्त्ता भविप्यति। एनं क्रीतदासं प्रति तथा व्यवस्थाऽवलम्बिष्यते यया एष सुचिरं समधिकं कष्टबाहुल्यं सहिष्यते। पुनर्भेनिस्-राष्ट्रे यावत् भवतः प्रकृत-रूपं परिज्ञातं भविष्यति, तावद्भवान् वन्दी भविष्यति। अनेन सार्धं मार्गोऽनुसरणीयः।

**ओथेलो।** क्षणं तिष्ठतु भवान्। राष्ट्रसेवा काचन मया कृता, तां ते जानन्त्येव। तद्विषये विरमामि। ममायं केवलानुरोधः, यदा अत्रत्या घटनावली भेनिस्‌नगरे संप्रेषयिष्यते, तदा प्रकृत-स्वरूपं तस्मिन् पत्रे यथायथं वर्णनीयमेव। न तद्विवरणं लघूकरणीयम्। पुनर्विद्वेषहेतोः काचन अतिशयोक्तिर्वा न करणीया।

भवद्भिरित्थं विवृतिर्देया—यद्यपि एतस्य जनस्य प्रेम न सुविवेचनापूर्वकं संप्रसृतं तथापि अन्तरेऽस्य काचन न्यूनता नासीत्। सर्वान्तःकरणेन स तां समाद्रियत इति। अनायासेर्ष्याप्रवणता नैतस्यासीत् किन्तु परप्रभावेण स बुद्धिहीनः आमेरिकादिनिवासिवत् तदेव रत्नं दूरं चिक्षेप, यदासीत्तस्य समग्र-जातेरपि मूल्यवत्तरम्। अनायास-विगलितो यद्यपि स नाभवत् तथापि सन्तप्तः सन् स निरन्तरमश्रुसेकं चकार—रसक्षरणशील आरवीयवृक्ष इव। एतद्वचो भवान् लिपिबद्धं करोतु। अतः परमेतदपि भवद्भिर्लिपिबद्धं करणीयं, यदेकदा कश्चन उद्धतः शिरोवस्त्रधारी तुर्कनिवासी कंचन भेनिसुनिवासिनं प्रहृतवान, राष्ट्राय कुत्सितं वचः समुच्चारयामास च, तदा तं बर्वरं कुक्कुरम् अनेनैव प्रकारेणाहमाहतवान्।

(आत्मानं करोति छुरिकाहतम्)

**लोडोभिको।** अहो रक्ताक्तः समयः।

**ग्र्यासियानो।** यत् किञ्चिदुक्तं सर्वं तद् विनष्टं किल।

**ओथेलो।** तव हत्यायाः प्राक् त्वामहं चुम्बितवान्। इत्थमेव हत्याया अनन्तरमपि तादृशेनैव चुम्बनेन विदायं गृह्णामि। (मृत्युः)

**क्यासिओ।** इयमेव ममाशङ्काऽसीत्। किन्तु असौ निरस्त्र इति मम धारणाऽजायत। महान्तःकरणोऽसौ।

**लोडोभिको।** ( इयागों प्रति ) अये स्पार्टादेशीय कुक्कुर! चिन्ता-बुभुक्षा-समुद्रेभ्योऽप्यसि निष्ठुरतरः। शय्याया उपरि निहितं शोकराशि-मवलोकय। ईदृशी तव कीर्तिः! दृष्टिकलुषकरं दृश्यमेतत् आच्छादनीयम्। ग्रग्रासियानो! गृहमिदं भवता परिरक्षणीयं, मुरस्य धनसम्पत्तेर्भारमपि भवान गृह्णातु। एतेषामुत्तराधिकारो भवत एव। शासक-महोदय! अस्य दुरात्मनः शासनभारो भवति न्यस्यते। समयं स्थानं शास्तिं भवान् स्थिरीकरोतु। एष आदेशः परिपालनीयः। पोतं प्रत्यहं यामि, भाराक्रान्त-हृदयेन मया राष्ट्रसकाशे सर्वमिदं निवेदनीयम्।

कलयतु नहि कश्चित् स्वाधिकाराधिकेच्छां
जहतु नयनसीमामुग्र-बीभत्स-भावाः।
न हृदयमधिकुर्युर्द्वेष-हिंसादयो नो
भवतु सकल-पृथ्वी शान्तिसिक्ता समन्तात्॥

( समाप्तमिदं नाटकम् )

**Sanskrit Dramas by Dr, Jatindra Bimal Chaudhuri**

**Sesies No. 1 Panca-Matrika-Lila Series**

1. Dhriti-Sitam. On Sri Sri Sita.
2. Ananda-Radham. On Sri Sri Radha Rs. 8/-
3. Niskincana-Yasodharam on Yosodhara Gopa, Holy Consort of Lord Buddha. Rexin Bound Rs. 8. Pa per Cover Rs. 10/- only.
4. Priti- Visnupriyam. On the early life of Sri Visnupriya, Holy Consort of Sri Krisnacaitanya Mahaprabhu. Rs 8. only
5. Bhakti-Visnupriyam on the holy life of Sri Visnupriya, the Holy Consort of Sri Krisnacaitanya Mahaparabhu, from Mahaprabhu's Renunciation to the end of Sri Visnupriya's life. Rs. 8. only.
6. Amara-Miram On Sri Mira Bai. Rs 6/-
7. Bharata-Laksmi. On Rani Laksmi of Jhansi. Rs 8/-
8. Sakti-Saradam. On Sri Saradamani Devi, Holy Consort of Sri Ramakrisna Paramahamsadeva. From her nineteenth year to 1886 A. D. Rexin Rs. 10/. only ; Paper CoverRs. 8/. only.
9. Mukti-Saradam. On Sri Saradamani Devi, Holy Consort of Sri Ramakrisna Paramahamsadeva. From 1887—1920 A. D. Rs. 8.

**Series No. 2 on Mother India.**

10. Mahimamaya-Bharatam. On the Irrigation Policy of India throughout the Ages. Rs 6/-
11. Melana-tirtha-Bharatam. India's Contribution to Universal Brotherhood throughout the Ages deliniating episodes from the lives of Vedic Sage Atharvan, Sage Agastya, Emperor Asoka, Guru Nanak, Sri Ramakrisna Paramahamsadeva. Ravindranatha, and Mahatma Gandhi. Paper Cover Rs. 6/- Rexin : Rs. 8/-

**Series No. 3 on Indian Leaders of Thought and Action.**

12. Bharata-Hridaya-Aravindam On Sri Aurobindo. Paper Cover 8/-
13. Bhaskarodayam. On the early life of Ravindra Nath (up to his twenty-fifth year). With Principal Dr. Roma Chaudhuri's English Translation. Rexin Bound Rs. 16/-. Sanskrit Text and Translation : Separately bound Rs. 8/- and Rs. 10/-
14. Bharata-Bhaskaram on Ravindranath (from his 26th to 50th year).

15. Bhuvana-Bhaskaram on Ravindra Nath (from his 51st year to the end of his life).

16. Bharata-Janakam on Mahatma Gandhi. Rs. 6/- ; Rexin Bound Rs. 8/-.

17. Desabandhu-Desapriyam-on Desabandhu Chittaranjan and Desapriya Jatindra Mohan. Rs. 6,

18. Subhasa-Subhasam-on Netaji Subhas Chandra Bose. Rs. 6,

19. Raksaka-Sri Goraksam—on Sri Goraksanath. Rs. 8,

**Series No. 4. On Vaisnava Saints :**

20. Vimala-Yatindram on Vedantacarya Sri Ramanuja. Rs. 8/- ; Rexin Rs. 10/-

21. Mahaprabhu-Haridasam on Bhakta-Yavan Haridasa, one of the foremost disciples of Sri Krisnacaitanya Mahaprabhu Rs 8/- ; Rexin Rs. 10/-

22. Dina-Dasa-Raghunatham. On Sri Raghunath Dasa Gosvamin Prabhu, one of the Six Vriudavana Gosvamins. Paper Cover Rs. 8/- ; Rexin Rs. 10/-.

**Series no. 5. Adaptations from Foreign Dramas**

23. Venice-Vanijam-(from Shakespeare's Merchant of Venice). Rs. 6

24. Othello (from Shakespeare's "Othello"). Rs. 6

**Pali-Drama.**

**The only Pali Drama ever written.**

25. The Bimbasundari-Patibimbanam on Sri Yasodhara, Holy Consort of Prince Siddhartha, depicting the entire life of Sri Sri Yasodhara.

**Other Works of Dr. J. B. Chaudhuri**

1. Contributions of Women to Sanskrit Literature in seven big volumes. 95.00

2. Contributions of Muslims to Sanskrit Learning :
   Vol. I. Sangita-Malika by Md. Shah 10.00
   Vol. II. Khan Khanan Abdur Rahim and Contemporary Sanskrit Learning. (Paper Rs. 6) Rexin. 8.00
   Vol. III. Samudra Sangama by Md. Dara Sukoh 20.00

3. (a) Muslim Patronage to Sanskrit Learning : (Belles-Letters) 2nd Ed. 12.00

(b) Muslim Patronage to Astrology and Astronomy (Jatakodaharana-Paddhati) 16,00

(c) Biography. Rudrakavi on his Muslim Patrons. 6.00

4. Sanskrita Duta-Kavya Samgraha in seven volumes with two original Sanskrit commentaries by Dr. J. B. Chaudhuri on the Ghatakharpara Kavya and the Padankaduta called Sasvati aud Bhasvati respectively 30.00

5. Sanskrit Poets of Mediaeval India Based upon Anthologies. (5 Volumes) 35.00

6. (a) Meghaduta with commentaries of Bharata Malika and others 20.00

(b) Meghaduta with commentaries of Sasvata and Sanatan Gosvamin 20.00

7. Vangiya Duta-Kavyetihasa (in Sanskrita). 8.00

8. Contributions of Bengal to Smriti Literature Vols. 1-3 ( 3rd vol. in Press ) 14.00

9. Historical Kavyas in Sanskrit, 4 Vols. 39.00

10. Poetical Works, etc.

A. Original Composition in Sanskrit

(a) Sakti-Sadhanam. 4.00

(b) Several commentaries on Sanskrit Texts. See Detailed Catalogue 5.00

(c) Sanskrit and Bengali Songs of Dr. Jatindra Bimal Chaudhuri, with Bengali Translation by Principal Dr. Roma Chaudhuri, Principal, Lady Brabourne College—in Seven Parts. 15.00

B. Works on Hindu Dharma with Bengali Translation

(a) Bhagavad Gita (Rexin) 6.00

(b) Sri Sri Candi 6.00

11. Bengali Works

(a) Pt. Iswar Chandra Vidyasagar 4.00

(b) Gaudiya Vaisnavder Sanskrit Sahitye Dan 4.00

(c) Prabandhavali in Eight Vols (Rs. 5 each) 40.00

(d) Buddha-Yasodhara—
(Paper Rs. 5. ) Rexin, Rs 7. 5.00

(e) Janani Yasodhara 8.00

12. The Position of Women in the Vedic Ritual 15.00

13. Miscellaneous
   (a) Sanskrit and Prakrit Books in the India Office Library by Dr. J. B. Chaudhuri (as Joint Author) in four big volumes 250.00
   Pracyavani, 12 Volumes ; each volume Rs. 12 144.00
   (c) .Gaura-tattvam 8.00
   (d) Nripati-niti-garbhita-vritta 20.00

## WORKS OF Dr. ROMA CHAUDHURI

( Principal, Lady Brabourne College, Calcutta, Govt. of W. Bengal )

**English**

1. **Doctrines of Nimbarka and His Followers** ( Vaisnava-Vedanta )—In 3 Volumes. Published by Asiatic Society of Bengal. Rs. 18·00
2. **Sufism and Vedanta.** In 3 Volumes. 2 Volumes Published ( 2nd Edition, 3rd vol. in the Press. ) Rs. 18·00
3. **An Indo-Islamic Synthetic Philosophy** ( Comparative Survey of India and Islamic Views, viz. of the Upanisads, Vedanta Systems, Holy Quran and Sufi Systems ) Rs· 20·00
4. **Doctrines of Srikantha** ( Saiva Vedanta ). In 3 Volumes. 2 Volumes published. 3rd Vol. in the Press. Rs. 52-00
5. **Sanskrit and Prakrit Poetesses.** Rs. 15·00
6. **Philosophical Essays** ( Collection of Articles in English and Bengali ). In the Press.

**Bengali**

1. **Nimbarka Darsan** Rs. 8·00
2 **Sufi Darsan O Vedanta** Rs. 8·00
3. **Sanskrita O Prakrita Nari Kaviganer Kavitavali.** Published by Visva Bharati. Rs. 2.50
4. **Vedanta Darsan** ( 3rd Ed ) Published by Visva Bharati.
5. **Dasa Vedanta Sampradaya O Vanga-Desa.** In 3 Volumes. First Vol. ( on Sankara-Vedanta ) Published. Rs. 30·00

6. **Sahitya-Kana** Rs. 3·00
7. **Sanskritanka Roga.** Rs. 3·00

## SANSKRIT DRAMAS OF Dr. ROMA CHAUDHURI

1. **Yatindra-Yatindram** ( on the holy life of Dr. Jatindra Bimal Chaudhuri ), Rs. 10·00
2. **Samkara-Samkaram** ( on the holy, life of great Advaita Vedantist Sri Samkara.) Rs. 10·00
3. **Desa-Dipam** ( on a nationalistic theme, on the holy life of a "Jawan", fighting for his Mother-Country.) Rs. 6·00
4. **Palli-Kamalam** ( on a Village-lass ) Rs. 10·00
5. **Nagara-Nupuram** ( on a City Girl ) Rs. 10·00
6. **Abhedanandam** ( on the holy life of Swami Abhedanandam, on the occasion of his holy Birth-Centenary). Rs. 10·00
7. **Nivedita-Niveditam** ( on the holy life of Sister Nivedita, on the occasion of her holy Birth-Centenary. ) Rs. 10·00
8. **Bharatacaryam** ( on the holy life of Dr. Sarvapalli Radhakrishnan, President of India ) Rs. 10·00
9. **Rama-Carita-Manasam** ( on the holy life of Saint Tulsidasa ) Rs. 10·00

( The above Sanskrit Dramas have been staged all over India and outside many times. "Samkara-Samkaram" was staged in Kathmandu, Nepal, under the auspices of Indian Embassy, in the benign presence of His Majesty, King Mahendra of Nepal and other members of the Royal Family.

"Bharatacaryam" was staged in Rastrapati Bhavan, New Delhi, in the benign presence of the revered Rastrapati Dr. Radhakrishnan, who donated Rs. 1500, to Pracyavani as his blessings. )

10. **Tana-Tanu** ( on the holy life of Sri Tanasena ) Rs. 10·00
11. **Yuga-Jivanam** ( on the holy life of Sri Ramakrisna ) Rs. 10·00
12. **Bharata-Viram** (on the holy life Sri Sivaji ) Rs. 10·00

——